दत्त्वा स तस्योत्तरमित्यबाधं ददौ सुतायातिरथाय राज्यम्।
यन्निर्व्यपेक्षा परमार्थलिप्सोर्धात्रीं तृणायापि न मन्यते धीः॥ ७६॥
अथैनमापृच्छ्य सबाष्पनेत्रं पुत्रं प्रपित्सुर्वनसंनिवेशम्।
प्रजाः स भास्वानिव चक्रवाकीराक्रन्दिनीस्तत्प्रथमं चकार॥ ७७॥
त्यक्ताव[1]रोधोऽपि सहावरोधैर्न[2]क्षत्रमुक्तानुपदोऽपि राजा।
प्रापद्वनं पौरहृदि स्थितोऽपि को वा स्थितिं सम्यगवैति राज्ञाम्॥७८॥
तद्वाहनं श्रीविमलादिमादौ नत्वा गुरुं भूपशतैरुपेतः।
तत्रोग्रकर्मक्षयमूलशिक्षां दीक्षां स जैनीमभजज्जितात्मा॥ ७९॥
तथा[3] समुद्रामधिबिभ्रदुर्वीं धुन्वन्नरातीनपि विग्र[4]हस्थान्।
मु[5]क्तोत्तमालंकरणः प्रजापो वनेऽपि साम्राज्यपदं बभार॥ ८०॥
ध्यानानुबन्धस्तिमितोरुदेहो मित्रेऽपि शत्रावपि तुल्यवृत्तिः।
व्यालोपगूढः स वनैकदेशे स्थितश्चिरं चन्दनवच्चकासे॥ ८१॥
पूषा तपस्यल्परुचिः सदोषः शशी शि[6]खावानपि कृष्णवर्त्मा।
गुणोदधेस्तस्य ततो न कश्चित्तमः समुन्मूलयतः समोऽभूत्॥ ८२॥
निरामयश्रीस[7]दनाग्रनीत्रं तीव्रं तपो द्वादशधा विधाय।
धन्योऽथ संन्यासविसृष्टदेहः सर्वार्थसिद्धिं स मुनिर्जगाम॥ ८३॥
तत्र त्र[8]यस्त्रिंशदुदन्वदायुर्देवोऽहमिन्द्रः स बभूव पुण्यैः।
निर्वाणतोऽर्वागधिकावधीनां मूर्तः सुखानामिव यः समूहः॥ ८४॥
सा तत्र मुक्ताभरणाभिरामा यन्मुक्तिरामा निकटीबभूव।
मन्ये मनस्तस्य ततोऽन्यनारीविलासलीलारसनिर्व्यपेक्षम्॥ ८५॥
तस्य प्रभाभासुररत्नगर्भा विभ्राजते रुक्मकिरीटलक्ष्मीः।
अव्याजतेजोनिवहस्य देहे द्राघीयसी प्रज्वलतः शिखेव॥ ८६॥

---

१. वन्धनम्; राज्ञामन्तःपुरं च. २. नक्षत्रैर्मुक्तानुपदो राजा चन्द्र इति विरोधः; (पक्षे) न-क्षत्रमुक्तानुपदः. ३. आ समुद्रां पृथ्वीं बिभ्रत्; (पक्षे) स उर्वीं मुद्रां बिभ्रत्. मुद्रा योगशास्त्रादिप्रसिद्धाः. ४. शरीरस्थान्कामक्रोधादीन्; (पक्षे) युद्धस्थान्. ५. मुक्तानि त्यक्तानि उत्तमभूषणानि येन; (पक्षे) मौक्तिकमयोत्तमाभरणः. ६. अग्निः. ७. प्रधानगृहम्. ८. त्रयस्त्रिंशज्जलधिमितायुः.

रेखात्रयाधिष्ठितकण्ठहारिहारावली तस्य विभोर्विभाति ।
सुदर्शनस्यात्यनुरक्तमुक्तिमुक्ता कटाक्षप्रसरच्छटेव ॥ ८७ ॥
नूनं सहस्रांशुसहस्रतोऽपि तेजोऽतिरिक्तं न च तापकारि ।
शृङ्गारसाम्राज्यमनन्यतुल्यं न चाभवत्तस्य मनोविकारि ॥ ८८ ॥
नवं वयो लोचनहारि रूपं प्रभूतमायुः पदमद्वितीयम् ।
सम्यक्त्वशुद्धाश्च गुणा जगत्सु किं किं न लोकोत्तरमस्ति तस्य ॥८९॥
तस्य त्रियामाभरणाभिरामान्वक्तुं गुणान्वाञ्छति यः समग्रान् ।
आप्लावयन्तं जगतीं युगान्ते मुग्धस्तितीर्षत्युदधिं स दोर्भ्याम् ॥९०॥
[1]शरद्दलादूर्ध्वमितश्च्युतः सन्नस्याः स गर्भे भवतः प्रियायाः ।
शुक्तेरिव स्वातिभवोदबिन्दुर्मुक्तात्मकोऽग्रेऽवतरिष्यतीह ॥ ९१ ॥
इति निशम्य स सम्यगुदीरितां यमवतोऽन्यभवस्थितिमर्हतः ।
ससुहृदुत्पुलकस्तिलको भुवः स्फुटकदम्बकदम्बकवद्बभौ ॥ ९२ ॥

अथोचितसपर्यया मुनिमनिन्द्यविद्यास्पदं
प्रपूज्य सपरिग्रहो विधिवदेनमानम्य च ।
यथासमयमेष्यतां सुमनसामिवातिथ्यवि-
द्विधातुमयमर्हणां द्रुतमगादगारं नृपः ॥ ९३ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

तत्र कारयितुमुत्सवं मुदा यावदेष सदसि न्यविक्षत ।
तावदम्बरतटावतारिणीः प्रैक्षतामरविलासिनीर्नृपः ॥ १ ॥
तारकाः क नु दिवोदितद्युतो विद्युतोऽपि न वियत्यनम्बुदे ।
क्वाप्यनेधसि न वह्नयो महस्तत्किमेतदिति दत्तविस्मयाः ॥ २ ॥
कंधरावधि तिरोहिता घनैः क्वाप्यभिन्नमुखमण्डलश्रिया ।
यामिनीरिपुजिगीषयोद्यतं सोमसैन्यमनुकुर्वतीः क्षणम् ॥ ३ ॥

---

१. मासषट्कात्. २. पूर्वजन्मवार्ताम्.

रत्नभूषणरुचा प्रपञ्चिते वासवस्य परितः शरासने ।
अन्तरुद्धुरतडित्त्विषो जनैः स्वर्णसायकततीरिवक्षिताः ॥ ४ ॥
कान्तिकाण्डपटगुण्ठिता पुरा व्योमभित्तिमनु वर्णकद्युतिम् ।
तन्वतीस्तदनुभाविताकृतीस्तूलिकोल्लिखितचित्रविभ्रमम् ॥ ५ ॥
शीतदीधितिधियाभिधावितैः सैंहिकेयनिकुरम्बकैरिव ।
सौरभादभिमुखालिमण्डलैर्भ्राजितानि वदनानि बिभ्रतीः ॥ ६ ॥
स्वानुभावधृतभूरिमूर्तिना पद्मरागमणिनूपुरच्छलात् ।
भानुना क्षणमिह प्रतीक्ष्यतामित्युपात्तचरणाः समन्मथम् ॥ ७ ॥
निष्कलङ्कगलकन्दलीलुठत्तारहारलतिकापदेशतः ।
संगता इव चिरेण गौरवादन्तरिक्षसरितावगूहिताः ॥ ८ ॥
पारिजातकुसुमावतंसकस्पर्शमन्थरमरुत्पुरःसराः ।
पश्यतोऽथ नृपतेः सभान्तिकं ताः समीरणपथादवातरन् ॥९॥ (कुलकम्)
पीवरोच्चकुचमण्डलस्थितिप्रत्ययानुमितमध्यभागया ।
दुर्वहोरुजघना जगल्लघूकुर्वतीरतुलरूपसंपदा ॥ १० ॥
तत्र कोकनदकोमलोपलस्तम्भमिन्दुमणिमण्डपं पुरः ।
ताः प्रतापधृतमद्भुतोदयं भूपतेर्यश इव व्यलोकयन् ॥ ११ ॥
तत्प्रतिक्षणसमुल्लसद्यशोराजहंसनिकुरम्बकैरिव ।
कामिनीकरविवर्तनोच्छलच्छुभ्रचामरचयैर्विराजितः ॥ १२ ॥
दाक्षिणात्यकविचक्रवर्तिनां हृच्चमत्कृतिगुणाभिरुक्तिभिः ।
पूरितश्रुतिशिरो विघूर्णयन्नेतुमन्तरिव तद्रसान्तरम् ॥ १३ ॥
सुस्वरश्रुतिमुदाररूपकां रागिणीं पृथगुपात्तमूर्छनाम् ।
गीतिमिन्दुवदनामिवोज्ज्वलां भावयन्मुकुलितार्धलोचनः ॥ १४ ॥
एणनाभिमभिवीक्ष्य कक्षयोः क्षिप्तभीततिमिरानुकारिणम् ।
रत्नकुण्डलमिषेण भानुना सेन्दुना किमपि संश्रितश्रुतिः ॥ १५ ॥
अङ्गवङ्गमगधान्ध्रनैषधैः कीरकेरलकलिङ्गकुन्तलैः ।
विभ्रमादपि समुत्क्षिपन्भ्रुवं भीतभीतमवनीश्वरैः श्रितः ॥ १६ ॥

तत्र हेममयसिंहविष्टरे काञ्चनाचल इवोच्चकैः स्थितः ।
सप्रमोदमुदितेन्दुसंनिभस्ताभिरैक्षि सदसि क्षितीश्वरः ॥१७॥(कुलकम्)
कर्मकौशलदिदृक्षयात्र नः प्राप्त एष पुरतोऽपि किं प्रभुः ।
सत्त्वपोहितुमितः प्रभृत्यथो दौस्थ्यमर्थपतिरभ्युपस्थितः ॥ १८ ॥
एकका इह निशम्य तच्छलाद्वाधितुं मनसिजोऽथवा गतः ।
अन्यथास्य वसुधामिमामतिक्रामति द्युतिरमानुषी कुतः ॥ १९ ॥
तर्कयन्त्य इति ताः परस्परं सप्रमोदमुपसृत्य भूपतिम् ।
जीव नन्द जय सर्वदा रिपूनित्यमन्दमुदचीचरन्वचः ॥ २० ॥
(त्रिभिर्विशेषकम्)
ताः स यत्नपरकिंकरार्पितेष्वासनेषु नृपतिर्न्यवीविशत् ।
वारिदात्ययदिनोपबृंहितेष्वम्बुजेष्विव विरोचनो रुचः ॥ २१ ॥
ताः क्षितीश्वरनिरीक्षणक्षणे रेजुरङ्कुरितरोमराजयः ।
अङ्गमग्नविषमेषुमार्गणव्यक्तपुङ्खलवलाञ्छिता इव ॥ २२ ॥
निर्मलाम्बर[1]विशेषितत्विषस्तं स्फुरच्छ्रवण[2]हस्तभूषणाः ।
कान्तिमन्तममराङ्गना नृपं तारका इव विधुं व्यभूषयन् ॥ २३ ॥
सोऽथ दन्तकरकुन्दकुड्मलस्रग्विभूषितसभं सभापतिः ।
आतिथेयवितथीकृतक्लमा इत्युवाच सुरसुन्दरीर्वचः ॥ २४ ॥
यद्गुणेन गुरुणा गरीयसीं स्वर्बिभर्ति गणनां जगत्स्वपि ।
मन्दिराणि किमपेक्ष्य ताः स्वयं भूभुजामपि नृणामुपासते ॥ २५ ॥
किं नु सा स्थितिरथातिधृष्टता व्याजमेतदथवातिभाषणे ।
त्वादृशेऽपि यदुपागते जने किं प्रयोजनमिहेति जल्प्यते ॥ २६ ॥
भारतीमिति निशम्य भूपतेः श्रीरुवाच सुरयोषिदीरिता ।
दन्तदीधितिमृणालनालकैः कर्णयोर्निदधती सुधामिव ॥ २७ ॥
मा वदस्त्वमिति भूपते भवद्दास्यमेव भुवि नः प्रयोजनम् ।
वासरैस्तु कतिभिः पुरंदरोऽप्यत्र कर्मकरवद्यतिष्यते ॥ २८ ॥

---

१. वस्त्रम्; (पक्षे) आकाशः. २. आकाशपक्षे श्रवणहस्तौ नक्षत्रे.

निर्जरासुरनरोरगेषु ते कोऽधुनापि गुणसाम्यमृच्छति ।
अग्रतस्तु सुतरां यतो गुरुस्त्वं जगत्त्रयगुरोर्भविष्यसि ॥ २९ ॥
उक्तमागमनिमित्तमात्मनः सूत्रवत्किमपि यत्समासतः ।
तस्य भाष्यमिव विस्तरान्मया वर्ण्यमानमवनीपते शृणु ॥ ३० ॥
यच्चतुष्टयमनन्ततीर्थतोऽनर्धहायन[1]मुदन्वतामगात् ।
तस्य पल्य (?) दलमन्तिमं तथा भारतेऽभवदधर्मदूषितम् ॥ ३१ ॥
तेन धर्मपरिवर्तदस्युना शुद्धदर्शनमणौ हृते छलात् ।
वीक्षमाण इव केवलीश्वरं[2] वासवोऽनिमिषलोचनोऽभवत् ॥ ३२ ॥
अद्य भूप भवतोऽस्ति या प्रिया सुव्रता तदुदरे जिनोऽन्तरम् ।
अर्धवत्सरमतीत्य धर्म इत्येष्यतीत्यवधितो विवेद सः[3] ॥ ३३ ॥
तत्प्रयाथ जननीं जिनस्य तां भाविनीं चिरमुपाध्वमादरात् ।
इत्थमादिशदशेषनाकिनां नायकः समुपहूय नः क्षणात् ॥ ३४ ॥
आगतोऽयमिह तत्तवाज्ञया प्रेयसीं नृप निशान्तवर्तिनीम् ।
ध्यातुमिच्छति सुराङ्गनाजनः कौमुदीमिव कुमुद्वतीगणः ॥ ३५ ॥
संवदन्तमिति भारतीं मुनेर्वाक्प्रपञ्चमवधार्य स श्रियः ।
उत्सवं द्विगुणितादरो द्वयेऽप्याशु धाम्नि पुरि च व्यदीधपत् ॥ ३६ ॥
ताश्च कञ्चुकिपुरःसरास्ततस्तेन तूर्णमवरोधमन्दिरम् ।
भास्वताग्रचरसंमदा रुचश्चन्द्रमण्डलमिव प्रवेशिताः ॥ ३७ ॥
तत्र भूरिविबुधावतंसकप्रीतिपूरिगुणपूरपूरिताम् ।
अङ्गसौरभविसर्पिषट्पदां पारिजाततरुमञ्जरीमिव ॥ ३८ ॥
संभ्रमभ्रमितलोललोचनप्रान्तवान्तशुचिरोचिषां चयैः ।
अद्भुतं धवलितालयामपि ध्यामलीकृत[4]विपक्षयोषितम् ॥ ३९ ॥
कामसिद्धिमिव रूपसंपदो जीवितव्यमिव यौवनश्रियः ।
चक्रवर्तिपदवीमिव द्युतेश्चेतनामिव विलासवेषयोः ॥ ४० ॥

---

१. मासषट्कोनजलधिमितवर्षाणाम्. २. जिनम्. ३. इन्द्रः. ४. मलिनीकृत.

तामनेकनरनाथसुन्दरीवृन्दवन्दितपदां द्युयोषितः ।
हारिहेमहरिविष्टरे[1] स्थितां मानुषेशमहिषीं व्यलोकयन् ॥ ४१ ॥ (कुलकम्)
तामुदीक्ष्य जितनाकनायिकाकायकान्तिमबलामिलापतेः[2] ।
ताभिरप्रतिमकालसंचितोऽप्युज्झितः सपदि चारुतामदः ॥ ४२ ॥
श्रीरशेषसुखदा प्रियंवदा भारती रतिरभेद्यकिंकरी ।
सौम्यदृष्टिरपि कर्णमोटिका[3] कालिका च रचितालकावलिः ॥ ४३ ॥
शीलवृत्तिरपराजिता जने सा वृषप्रणयिनी मनःस्थितिः ।
ह्रीप्रसत्तिधृतिकीर्तिकान्तयः स्पर्धयेव कुलमण्डनोद्यताः ॥ ४४ ॥
देव्य इत्यलमिमामुपासते प्रागपि प्रगुणिता गुणैः स्वयम् ।
तन्निदेशरसपेशलं हरेर्ब्रूहि कर्म किमु कुर्महेऽधुना ॥ ४५ ॥ (कुलकम्)
इत्युदीर्य च मिथः प्रणम्य च स्वं निवेद्य च तदिन्द्रशासनम् ।
स्वःस्त्रियस्त्रिभुवनेशमातरं तां निषेवितुमिहोपचक्रिरे ॥ ४६ ॥
अश्मगर्भमयमूर्ध्वमुद्धृतं[4] छत्रमिन्दुमणिदण्डमेकया ।
भ्राजते स्म सुदृशोऽन्तरुत्तरज्जाह्नवौघमिव मण्डलं दिवः ॥ ४७ ॥
कापि भूत्रयजयाय वल्गतो वल्गु तूणमिव पुष्पधन्वनः ।
पुष्पचारु कबरीप्रसाधनं मूर्ध्नि पार्थिवमृगीदृशो व्यधात् ॥ ४८ ॥
अङ्गरागमपि कापि सुभ्रुवः सांध्यसंपदिव निर्ममे दिवः ।
यामिनीव शुचिरोचिषं परा चारुचामरमचालयच्चिरम् ॥ ४९ ॥
मूर्ध्नि रत्नपुरनाथयोषितः सा कयापि रचितालकावलिः ।
या मुमोष मुखपद्मसंनिधौ गन्धलुब्धमधुपावलिश्रियम् ॥ ५० ॥
एणनाभिरसनिर्मितैकया पत्रभङ्गिमकरी कपोलयोः ।
अभ्यधत्त सुतनोरगाधतामुल्लसल्लवणिमाम्बुधेरिव[5] ॥ ५१ ॥
निष्कलङ्कमणिभूषणोच्चयैः सा कयापि सुमुखी विभूषिता ।
तारतारकवतीन्दुसुन्दरी शारदीव रजनी व्यराजत ॥ ५२ ॥

---

१. मनोहरे सुवर्णसिंहासने. २. भूपतेः. ३. चामुण्डा. ४. हरिन्मणिमयम्. ५ लावण्यसिन्धोः.

तावदेव किल कापि वल्लकीवेणुहारि हरिणेक्षणा जगौ ।
यावदर्थपतिकान्तयोदितां[1] नाश्रृणोदमृतवाहिनीं गिरम् ॥ ९३ ॥
एकया गुरुकलत्रमण्डले धृष्टकामुक इवाधिरोपितः ।
रागचञ्चलकराग्रलालितः कूजति स्म हतमानमानकः[2] ॥ ९४ ॥
वल्गितश्च नवविभ्रमेक्षणं वेपितस्तनमुदस्तहस्तकम् ।
चारु चित्रपदचारमेकया नर्तितस्मरमनर्ति तत्पुरः ॥ ९५ ॥
यद्यदिष्टतममुत्तमं च यज्ज्ञातपूर्वमिह यच्च किंचन ।
तत्तदाभिरभिकर्मकौशलं स्पर्धयेव विधिवद्व्यधीयत ॥ ९६ ॥
सर्वतोऽपि सुमनोरमार्पितालंकृतिर्गुणविशेषशालिनी ।
भारतीव सुकवेरभूत्तदा शुद्धविग्रहवती नृपप्रिया ॥ ९७ ॥
रात्रिशेषसमये किलैकदा सा सुखेन शयिता व्यलोकयत् ।
स्वप्नसंततिमिमां दिवोऽर्हतस्तीर्थपद्धतिमिवोत्तरिष्यतः ॥ ९८ ॥
संचरत्पदभरेण निर्भरं भज्यमानदृढकूर्मकर्परम् ।
कल्पगन्धवहलोलमुद्धुरं राजताद्रिमिव गन्धसिन्धुरम् ॥ ९९ ॥
श्रृङ्गसंततिकदर्थितग्रहं शारदाभ्रमिव शुभ्रविग्रहम् ।
भूत्रयोत्सवविधायिनं वृषं[3] मूर्तिमन्तमिव बिभ्रतं वृषम् ॥ ६० ॥
गर्जितग्लपितदिग्गजावलीगण्डमण्डलमदाम्बुनिर्झरम् ।
एणकेतनकुरङ्गलिप्सयेवान्तरिक्षरचितक्रमं हरिम् ॥ ६१ ॥
रावरोषदलिताम्बुदावलीलग्नलोलरुचिसंचयामिव ।
कंधरामुरुकडारकेसरोल्लासिनीं दधतमुद्धतं हरिम् ॥ ६२ ॥
(इति पाठान्तरम्)
स्फारकान्तिलहरीपरम्पराप्लावितप्रकृतिकोमलाकृतिम् ।
तत्क्षणभ्रमदमन्दमन्दरक्षुब्धवारिधिगतामिव श्रियम् ॥ ६३ ॥
संभृतभ्रमरसङ्गिविभ्रमं स्रग्द्वयं शुचि विकासिकौसुमम् ।
व्योम्नि दिग्गजमदाविलं द्विधा जाह्नवौघमिव वायुना कृतम् ॥ ६४ ॥

---

१. नृपपत्न्या. २. पटहः. ३. धर्मम्.

[१]उग्रदग्धमधिरोप्य लाञ्छनच्छद्मनात्मभुवमङ्कमात्मनः ।
ओषधीरसनिषेवणैरिवोज्जीवयन्तमुदितौषधीश्वरम् ॥ ६५ ॥
कौमुदीरसविलासलालसं मीनकेतुनृपतेः पुरोधसम् ।
कामिनीषु नवरागसंभ्रमाद्वैतवादिनमतिग्मतेजसम् ॥ ६६ ॥

(इति पाठान्तरम्)

सर्वथाहमपदोष एव किं ध्यामलो जन इति प्रतिज्ञया ।
लब्धशुद्धिमुडुदिव्यतण्डुलैश्चर्चितैरिव कृतोत्सवं रविम् ॥ ६७ ॥
स्तम्भितभ्रमितकुञ्चिताञ्चितस्फारितोद्वलितवेल्लितादिभिः ।
प्रक्रमैर्विहरदम्बुधौ युगं मीनयोर्नयनयोरिव श्रियः ॥ ६८ ॥
प्राग्रसातलगतस्य तत्क्षणान्निर्यतः सुकृतमत्तदन्तिनः ।
कुम्भयोरिव युगं समौक्तिकं शातकुम्भमयपूर्णकुम्भयोः ॥ ६९ ॥
अभ्युपात्तकमलैः [२]कवीश्वरैः संश्रुतं कुवलयप्रसाधनम् ।
द्रावितेन्दुरसराशिसोदरं सच्चरित्रमिव निर्मलं सरः ॥ ७० ॥
पीव[३]रोच्चलहरिव्रजोद्धुरं [४]सज्जनक्रमकरं समन्ततः ।
अब्धिमु[५]ग्रतरवारिमज्जित[६]क्ष्माभृतं पतिमिवावनीभुजाम् ॥ ७१ ॥
स्वस्वदीधितिपरिग्रहग्रहग्रामवेष्टितमिवाद्रिशेखरम् ।
चित्ररत्नपरिवेषमुच्चकैश्चारुहेमहरिणारिविष्टरम् ॥ ७२ ॥
अश्मगर्भमणिकिङ्किणीचयैः सानुभावमकृताश्रयैरिव ।
दिव्यगन्धहृतलोलषट्पदैः सस्वनैः सुरविमानमन्वितम् ॥ ७३ ॥
[७]मत्तवारणविराजितं स्फुरद्व[८]ज्रहेतिभरतोरणोल्बणम् ।
लोलकेतुपृतनाकदम्बकं नाकिनामिव विमानमम्बरे ॥ ७४ ॥

(इति पाठान्तरम्)

---

१. महादेवभस्मीकृतम्. २. जलपक्षिश्रेष्ठैः. ३. पीवरोच्चल-हरिव्रजोद्धुरम्; (पक्षे) पीवरोच्च-लहरि-व्रजोद्धुरम्. ४. सज्जन-क्रमकरम्; (पक्षे) सज्ज-नक्रमकरम्. ५. उग्र-तर-वारि; (पक्षे) उग्र-तरवारि. ६. क्ष्माभृतो राजानः पर्वताश्च. ७. मत्तवारणो वरण्डकः; (पक्षे) मत्तगजः. ८. हीरकप्रभाभरनिर्मिततोरणेन; (पक्षे) पविरूपायुधातिशयतः सङ्ग्रामोल्बणम्.

अन्तरूर्ध्वफणिविस्फुरत्फणास्थालकोल्बणमणिप्रदीपकैः ।
निष्फलीकृतरिरंसुभोगिनीफूत्कृतोद्यममहीन्द्रमन्दिरम् ॥ ७५ ॥
क्व प्रयासि परिभूय मेदिनीं दौस्थ्यमत्पुर इतीव रोषतः ।
चित्ररत्नचयमुल्लसत्करैः स्फारितोरुहरिचापमण्डलम् ॥ ७६ ॥
तीर्थकृत्तुरहमिन्द्रमन्दिरादेष्यतः पथि समृद्धिभावतः ।
अग्निमग्निकणसंततिच्छलादुत्क्षिपन्तमिव लाजसंचयम् ॥ ७७ ॥
प्रेक्ष्य तत्क्षणविनिद्रलोचना सा विहाय तलिनं[1] सुभूषणा ।
पत्युरन्तिकमुपेत्य सुव्रता स्वप्नसङ्घमखिलं तमब्रवीत् ॥ ७८ ॥
बन्धुरं तमवधार्य तस्य सद्बन्धुरन्तकरमेनसां फलम् ।
व्याजहार स रदाग्रदीधितिव्याजहारमुरसि प्रकल्पयन् ॥ ७९ ॥
तं निशम्य हृदि मौक्तिकावलीं दन्तजैर्द्विगुणयन्मरीचिभिः ।
प्रीतिकन्दलितरोमकन्दलीसुन्दराकृतिरवीवदन्नृपः ॥ ८० ॥
(इति पाठान्तरम्)

देवि धन्यचरिता त्वमेव या स्वप्नसंततिमपश्य ईदृशीम् ।
श्रूयतां सुकृतकन्दलि क्रमाद्वर्ण्यमानमनपायि तत्फलम् ॥ ८१ ॥
वारणेन्द्रमिव दानबन्धुरं सौरभेयमिव धर्मधूर्धरम् ।
केसरीशमिव विक्रमोदितं श्रीस्वरूपमिव सर्वसेवितम् ॥ ८२ ॥
माल्यवत्प्रथितकीर्तिसौरभं चन्द्रवन्नयनवल्लभप्रभम् ।
भानुवद्भुवनबोधकोविदं मीनयुग्मवदमन्दसंमदम् ॥ ८३ ॥
कुम्भयुग्ममिव मङ्गलास्पदं निर्मलं सर इव क्लमच्छिदम् ।
तोयराशिमिव पालितस्थितिं सिंहपीठमिव दर्शितोन्नतिम् ॥ ८४ ॥
देवतागमकरं विमानवद्गीततीर्थमुरगस्य हर्म्यवत् ।
सद्गुणाढ्यमिह रत्नराशिवत्प्लुष्टकर्मगहनं च वह्निवत् ॥ ८५ ॥
लप्स्यसे सपदि भूत्रयाधिपं तीर्थनाथममुना त्वमात्मजम् ।
जायते व्रतविशेषशालिनां स्वप्नवृन्दमफलं हि न क्वचित् ॥ ८६ ॥

---

१. शय्याम्.

इत्थं तदर्थकथया हृदि कुल्ययेव
श्रोत्रान्तरप्रहितया हृदयेश्वरेण ।
देवी प्रमोदसलिलैरभिषिच्यमाना
वप्रावनीव[1] विलसत्पुलकाङ्कुराभूत् ॥ ८७ ॥

स श्रीमानहमिन्द्र इत्यभिधया देवस्त्रयस्त्रिंशतो-
दन्वद्भिः प्रमितायुषो व्यपगमे सर्वार्थसिद्धेश्च्युतः ।
चन्द्रे बिभ्रति रेवतीप्रणयतां वैशाखकृष्णत्रयो-
दश्यां गर्भमवातरत्करितनुः श्रीसुव्रतायास्तदा ॥ ८८ ॥

आगत्यासनकम्पकल्पितचमत्काराः सुराः सर्वतो
जम्भारातिपुरःसराः सपदि तां गर्भे जिनं बिभ्रतीम् ।
स्तोत्रैस्तुष्टुवुरिष्टभूषणचयैरानर्चुरुच्चैर्जगु-
र्भक्त्या नेमुरनर्तिपुर्नवरसैस्तत्किं न यत्ते व्यधुः ॥ ८९ ॥

अहमिह महमीहे[2] यावदुच्चैर्विधातुं
कथमिव पुरुहूतोत्पादितं तावदीक्षे ।
इति मनसि विलक्षं तं क्षितीशं सरत्न-
त्रिदशकुसुमवृष्टिच्छद्मना द्यौरहासीत् ॥ ९० ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

सा भारतीव चतुरातिगभीरमर्थं
वेलेव गूढमणिमण्डलमम्बुराशेः ।
पौरंदरी दिगिव मेरुतिरोहितेन्दुं
गर्भं तदा नृपवधूर्दधती रराज ॥ १ ॥

तामादरादुदरिणीं रहसि प्रहृष्टा
दृष्टिः प्रतिक्षणमुदैक्षत भूमिभर्तुः ।

---

१. क्षेत्रभूमिरिव. २. उत्सवम्.

दैवादवाप्य तपनीयनिधानकुम्भीं
साशङ्करङ्ककुलमूलकुटुम्बिनीव[1] ॥ २ ॥
अन्तर्वपुः प्रणयिनः परमेश्वरस्य
निर्यद्यशोभिरिव सा परिरभ्यमाणा ।
स्वल्पैरहोभिरभितो घनसारसार-
क्लृप्तोपदेहमिव देहमुवाह देवी ॥ ३ ॥
तृष्णाम्बुधेरपरपारमुपागतं च
निर्बन्धनं च तनयं जनयिष्यतीयम् ।
तेनावरुद्धकलकेलिशकुन्तमुक्तिं
मुक्त्वान्यवस्तुषु बबन्ध न दोहदानि ॥ ४ ॥
वृद्धिं परामुदरमाप यथायथास्याः
श्यामाननः स्तनभरोऽपि तथातथाभूत् ।
यद्वा नितान्तकठिनां प्रकृतिं भजन्तो
मध्यस्थमप्युदयिनं न जडाः सहन्ते ॥ ५ ॥
तस्याः कपोलफलके स्फटिकाश्मकान्तौ
कंदर्पदर्पण इव प्रतिबिम्बिताङ्गः ।
रात्रावलक्ष्यत जनैर्यदि लाञ्छनेन
श्रीकण्ठकण्ठजरठच्छविना मृगाङ्कः ॥ ६ ॥
एकेन तेन[2] बलिना स्वबलेन तस्या
भङ्क्त्वा बलित्रयमवर्धत मध्यदेशः ।
तेनैव संमदरसेन सुहृत्तदाभू-
दत्यन्तपीवरतरः कुचकुम्भभारः ॥ ७ ॥
उत्खातपङ्किलबिसाविव राजहंसौ
शुभ्रौ सभृङ्गवदनाविव पद्मकोषौ ।

---

१. भूमितलाद्दैवानुकूल्येन लब्धसुवर्णकलशा मा कश्चिद्ग्रहीषींदिति भयाकुला दरिद्रगृहिणीव. २. तेन गर्भस्थेन.

तस्याः स्तनौ हृदि रसैः सरसीव पूर्णे
संरेजतुर्गवलमेचकचूचुकाग्रौ ॥ ८ ॥
गर्भे वसन्नपि मलैरकलङ्किताङ्गो
ज्ञानत्रयं त्रिभुवनैकगुरुर्बभार ।
तुङ्गोदयाद्रिगहनान्तरितोऽपि धाम
किं नाम मुञ्चति कदाचन तिग्मरश्मिः ॥ ९ ॥
काले कुलस्थितिरिति प्रतिपद्य विद्वा-
न्कर्तुं यदैच्छदिह पुंसवनादिकर्म ।
स्वःस्पर्धयेव तदुपेत्य पुरंदरेण
प्रागेव निर्मितमुदैक्षत स क्षितीशः ॥ १० ॥
सा गर्भनिर्भरतया सकलाङ्गसाद-
मासाद्य निष्क्रियतनुस्तरुणेन्दुगौरी ।
आलोकिता स्फटिककृत्रिमपुत्रिकेव
भर्तुस्तदा मदयति स्म मनो मृगाक्षी ॥ ११ ॥
वज्रानलादि न ससर्ज न चोज्जगर्ज
साश्चर्यमैलविल इत्यपरोऽम्बुवाहः ।
अष्टौ च सप्त च जिनेश्वरजन्मपूर्वा-
न्मासान्व्यधत्त नृपधामनि रत्नवृष्टिम् ॥ १२ ॥
पुष्पं गते हिमरुचौ तपसो वलक्ष-
पक्षाश्रितां तिथिमथ त्रिजयामवाप्य ।
प्राचीव भानुमभिनन्दितसर्वलोकं
सासूत सूत्रितनयं तनयं मृगाक्षी ॥ १३ ॥
शातोदरी शयनसंनिहितेन तेन
प्रोत्तप्तकाञ्चनसकाशरुचा चकाशे ।
कंदर्पदर्पजयिना नयनानलेन
कामद्विषः शिरसि चान्द्रमसी कलेव ॥ १४ ॥

१. गवलं माहिषं शृङ्गम्. २. ऐलविलः कुबेरः. ३. त्रयोदशीम्.

५

अष्टोत्तरां दशशतीं शुभलक्षणानां
बिभ्रत्स पुण्यविपणिः सहसापि दृष्टः ।
स्वर्गादृतेऽपि परमोत्सवनिर्निमेषाः
काश्चित्रमत्र न चकार चकोरनेत्राः ॥ १५ ॥

गच्छन्नधश्चिरतरं जिनजन्मदत्त-
हस्तावलम्ब इव निर्मलपुण्यराशिः ।
अप्रेरितोऽपि भवनामरमन्दिरेषु
निःसंख्यशङ्खनिवहः सहसोज्जगर्ज ॥ १६ ॥

रे रे भवभ्रमणजन्मजरान्तकाद्याः
सद्यः प्रयात शममेष जिनोऽवतीर्णः ।
इत्थं प्रशासदिव डिण्डिमचण्डिमोच्चैः
खं व्यन्तरानक[1]शतध्वनिराततान ॥ १७ ॥

एको न केवलमनेकपमण्डलस्य
गण्डाच्छिखण्डिगलकज्जलकान्तिचौरः ।
ज्योतिर्गृहग्रहिलसिंहसहस्रनादै-
रुत्कंधरः स जगतोऽपि मदो निरस्तः ॥ १८ ॥

तत्काललास्यरसलालसमोक्षलक्ष्मी-
विक्षिप्तपाणिमणिकङ्कणरावरम्यैः ।
जन्मन्यनल्पतरकल्पनिवासिवेश्म-
घण्टास्वनैः स्वयमपूरि जगज्जिनस्य ॥ १९ ॥

बालस्य तस्य महसा सहसोद्यतेन
प्रध्वंसितान्धतमसे सदने तदानीम् ।
सेवागताम्बरमुनीनिव सप्त काचि-
द्दीपान्व्यबोधयत केवलमङ्गलार्थम् ॥ २० ॥

जन्मोत्सवप्रथमवार्तिकमात्मजस्य
तस्य प्रमोदभरदुर्ललितो नरेन्द्रः ।

---

१. व्यन्तरो देवयोनिभेदः.

नोर्वीशमौलिमणिमालिकयाज्ञयैव
लक्ष्म्या पुनर्नियतमात्मसमीचकार ॥ २१ ॥

ते गन्धवारिविरजीकृतराजवर्त्म-
न्यभ्रादद भ्रघृणयो मणयो निपेतुः ।
यैस्तत्क्षणोप्तसुकृतद्रुमबीजपुञ्ज-
निर्यत्प्ररोहनिकराकृतिरन्वकारि ॥ २२ ॥

उत्क्षिप्तकेतुपटपल्लवितान्तरिक्षे
चिक्षेप तीक्ष्णरुचिरत्र पुरे न पादान् ।
मन्ये पतत्त्रिदशपुष्परसप्रवाह-
संदोहपिच्छिलपथच्छलपातभीतः ॥ २३ ॥

संवाहयन्निव मनाक्चिरबन्धमुक्ता-
स्त्वङ्गद्विसंस्थुलपदाः प्रतिपक्षवन्दीः ।
मन्दारदाममधुसीकरभारवाही
मन्दोऽतिमन्दगतिरत्र बभूव वायुः ॥ २४ ॥

तौर्यो ध्वनिः प्रतिगृहं लयशालि नृत्तं
गीतं च चारुमधुरा नवतोरणश्रीः ।
इत्याद्यनेकपरमोत्सवकेलिपात्रं
द्रागेकगोत्रमिव भूत्रितयं बभूव ॥ २५ ॥

शुभ्रं नभोऽभवदभूदपकण्टका भू-
र्भक्त्येव भानुरभिगम्यरुचिर्बभूव ।
आरोग्यवानजनि जानपदोऽपि लोक-
स्तत्किं न यत्सुखनिमित्तमभूत्तदानीम् ॥ २६ ॥

स्नाता इवातिशयशालिनि पुण्यतीर्थे
तस्मिन्रजोव्यपगमात्सहसा प्रसन्नाः ।
एष्यन्निजप्रणयिनां त्रिदिवात्तदानीं
संयोगयोग्यसमयाः ककुभो बभूवुः ॥ २७ ॥

रङ्गावलिध्वजपटोच्छ्रयतोरणादि-
व्यग्रे निधीश्वरपरिग्रहचक्रवाले ।
उद्वेल्लनोल्लसितरत्नरुचा हसद्भि-
र्निर्यामिकैरिव चिराच्चलितं निधानैः ॥ २८ ॥

जाते जगत्त्रयगुरौ गरिमाम्बुराशि-
नीरान्तरान्तरितविश्वमहिम्नि तत्र ।
कोऽन्यस्य राज्यमहिमेति किल प्रभाव-
शक्त्या हतं हरिहयासनमाप कम्पम् ॥ २९ ॥

तत्कम्पकारणमवेक्षितुमक्षमाणि
ज्ञात्वा शतान्यपि दशोज्ज्वललोचनानाम् ।
अत्यन्तविस्मयरसोत्सुकचित्तवृत्ति-
रिन्द्रोऽवधिं समुदमीलयदेकनेत्राम् ॥ ३० ॥

तेनाकलय्य जिनजन्म जवेन पीठा-
दुत्थाय तद्दिशि पदान्यपि सप्त गत्वा ।
देवो दिवस्तमभिवन्द्य मुदाभिषेक्तुं
प्रस्थानदुन्दुभिमदापयत क्षणेन ॥ ३१ ॥

उन्निद्रयन्निव चिराय शयालुधर्मं
तस्य ध्वनिर्भरितभूरिविमानरन्ध्रः ।
हर्म्याणि मेदुरतरोऽपि सुरासुराणां
द्राक्पारितोषकमिवार्थयितुं जगाम ॥ ३२ ॥

ते षोडशाभरणभूषितदिव्यदेहाः
स्वस्वोरुवाहनजुषः सपरिग्रहाश्च ।
हल्लग्नजैनगुणसंततिकृष्यमाणा-
श्चेलुर्बलादिव दशापि दिशामधीशाः ॥ ३३ ॥

स्वर्दन्तिनं तदनु दन्तसरःसरोज-
राजीनटल्लडहनाकवधूनिकायम् ।

१. लडहः सुन्दरः.

उत्फुल्ललोचनरुचां निचयैर्विचित्रैः
संचित्रयन्निव दिवस्पतिरारुरोह ॥ ३४ ॥

ऐरावणश्चटुलकर्णझलंझलाभि-
रुड्डीनगण्डमधुपावलिराबभासे ।
यात्रोद्यतः पथि जिनस्य पदे पदेऽसौ
निर्मुच्यमान इव पापलवैस्त्रुटद्भिः ॥ ३५ ॥

गच्छन्ननल्पतरकल्पतरुप्रसून-
पात्रीपवित्रकरकिंकरचक्रवालैः ।
सोढुं तदीयविरहार्तिमशक्नुवद्भिः
क्रीडावनैरिव रराज स पृष्ठलग्नैः ॥ ३६ ॥

अन्योन्यघट्टनरणन्मणिभूषणाग्रा
वाचालितोच्चकुचकुम्भभराः सुराणाम् ।
उल्लासिलास्यरसपेशलकांस्यताल-
लीलाश्रिता इव रसाल्ललनाः प्रचेलुः ॥ ३७ ॥

गायन्नटन्नमदनुव्रजदप्यमन्दं
वृन्दं तदा दिविषदां मिलदासमन्तात् ।
देवः पृथक्पृथगुपात्तविशेषभावै-
स्तुल्यं सहस्रनयनो नयनैर्ददर्श ॥ ३८ ॥

उद्दामरागरससागरमग्नहूहू-
हाहादिकिंनरतरङ्गितगीतसक्तः ।
संत्रासहेतुषु नदत्स्वपि तूर्यलक्षे-
ष्वन्तर्न शीतकिरणं हरिणो बबाधे ॥ ३९ ॥

क्रूरः कृतान्तमहिषस्तरणेस्तुरंगा-
द्योतिः कुरङ्गरिपवः (?) पवनस्य चैणः ।

---

१. 'गजकर्णगतिर्झलंझलेत्युच्यते' इति कामन्दकीयनीतिसारटीका (११४५).

सर्वे समं ययुरमी जिनमार्गलग्नाः
के वा त्यजन्ति न परस्परवैरभावम् ॥ ४० ॥

पुष्पैः फलैः किसलयैर्मणिभूषणैश्च
तैस्तैर्विचित्रवरचीवरसंचयैश्च ।
कर्तुं जिनेन्द्रचरणार्चनमुत्तरन्तः
कल्पद्रुमा इव वियत्यमरा विरेजुः ॥ ४१ ॥

अन्योन्यसंचलनघट्टितकर्कशोरः-
क्षुण्णोरुहारमणयो नटतां सुराणाम् ।
तारापथात्करिघटाचरणप्रचार-
संचूर्णितोडुनिचया इव ते निपेतुः ॥ ४२ ॥

सूर्यापगामिभिरिभैर्मरुतां कराग्र-
व्यापारिताभिरभितापिनि गण्डमूले ।
गण्डूषवारिविसरप्रसरच्छटाभि-
र्दध्रे क्षणं श्रवणचामरचारुलक्ष्मीः ॥ ४३ ॥

रक्तोत्पलं हरितपत्रविलम्बि तीरे
त्रिस्रोतसः स्फुटमिति त्रिदशद्विपेन्द्रः ।
बिम्बं विकृष्य सहसा तपनस्य मुञ्च-
न्धुन्वन्करं दिवि चकार न कस्य हास्यम् ॥ ४४ ॥

तारापथे विचरतां सुरसिन्धुराणां
सूत्कारनिर्गतकराम्बुकणा इवारात् ।
ताराः सुरैर्ददृशिरेऽथ मिथोऽङ्गसङ्ग-
त्रुट्यद्विभूषणमणिप्रकरानुकाराः ॥ ४५ ॥

त्रैविक्रमक्रमभुजंगमभोगमुक्ता
निर्मोकरज्जुरिव दृष्टविषातिरेका[1] ।

---

१. दृष्टजलाधिक्या च.

व्योमापगा द्युपुरगोपुरदेहलीव
　देवैर्व्यलोकि घटिता स्फटिकोपलेन ॥ ४६ ॥

रेजे जिनं स्नपयितुं पततां सुराणां
　शुभ्रा विमानशिखरध्वजपङ्क्तिरभ्रे ।
आनन्दकन्दलितरूपशतं पतन्ती
　ज्ञात्वा निजावसरमम्बरनिम्नगेव ॥ ४७ ॥

जाते जिने भुवनशास्तरि संचरन्तः
　स्वर्दन्तिनो नभसि नीलपयोदखण्डम् ।
नाथादृते प्रथममिन्दुपुरप्रतोल्यां
　दत्तं कपाटमिव लोहमयं बभञ्जुः ॥ ४८ ॥

अव्याहतप्रसरवातविवर्तमान-
　नीलान्तरीय[1]विवरस्फुरितोरुदण्डा ।
बाह्यच्छविव्यपनयार्पितगर्भशोभा
　रम्भेव[2] कस्य न मनो हरति स्म रम्भा ॥ ४९ ॥

यावज्जिनेश्वरपुरं हरिराजधान्याः
　स्वर्गौकसां नभसि धोरणिरापतन्ती ।
लोकस्य शास्तरि जिने दिवमारुरुक्षो-
　र्निःश्रेणिकेव सुकृतेन कृता रराज ॥ ५० ॥

वल्गद्घनोरुलहरीनिवहान्तराल-
　हेलोल्लसन्मकरमीनकुलीरपोतान् ।
ये यानपात्रपटलप्रतिमैर्विमानै-
　रुत्तेरुरम्बरमहाम्बुनिधेरमर्त्याः ॥ ५१ ॥

द्वारि द्वारि नभस्तलान्निपतितैस्तूपैर्[3]मणीनां मुनि-
　क्रीडापीतपयोधिभूतलमिव व्यालोकयद्यद्यपि ।
एकस्यैव जगद्विभूषणमणेस्तस्यार्हतो जन्मना
　मेने रत्नपुरं तथापि मरुतां नाथस्तदा सार्थकम् ॥ ५२ ॥

१. अन्तरीयमधोवस्त्रम्. २. कदलीव. ३. समूहैः.

पुरमिव पुरुहूतः प्राञ्जलिस्त्रिः परीत्य
त्रिभुवनमहनीयं हर्म्यमस्यातिरम्यम् ।
समुपनयनबुद्ध्या विश्वविश्वाधिपत्यं[1]
श्रियमिव सहसान्तः प्रेषयामास कान्ताम्[2] ॥ ९३ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये षष्ठः सर्गः ।

---

सप्तमः सर्गः ।

प्रविश्य सद्मन्यथ सुव्रतायाः समर्प्य मायाप्रतिरूपमङ्के ।
शची जिनं पूर्वपयोधिवीचेः समुज्जहारेन्दुमिवोदितं द्यौः ॥ १ ॥
अवाप्य तत्पाणिपुटाग्रमैत्रीं प्रकाशमाने जिनयामिनीशे ।
करारविन्दद्वितयं तदानीं बिडौजसः कुड्मलतां जगाम ॥ २ ॥
प्रमोदबाष्पाम्बुकरम्बितेन दृशां सहस्रेण सहस्रनेत्रः ।
अपश्यदस्याकृतिलक्षणानां सकष्टमष्टाभ्यधिकं सहस्रम् ॥ ३ ॥
अपारयन्नप्रतिरूपमङ्गं जिनस्य तस्येक्षितुमीक्षणाभ्याम् ।
सहस्रनेत्राय तदा समूहः सुरासुराणां स्पृहयांबभूव ॥ ४ ॥
तमादरादर्भकमप्यदभ्रैर्गुणैर्गरीयांसमशेषलोकात् ।
कृतप्रणामाय पुरंदराय समर्पयामास पुलोमपुत्री[3] ॥ ५ ॥
ससंभ्रमेणाभ्रमुवल्लभस्य[4] न्यधायि मूर्ध्नि त्रिदिवेश्वरेण ।
जयेति वाचं मुहुरुच्चरद्भिः कराञ्जलिः स्वस्य सुरैरशेषैः ॥ ६ ॥
स तत्र चामीकरचारुमूर्तिः स्फुरत्प्रभामण्डलमध्यवर्ति ।
अनम्बुधारावरतुङ्गशृङ्गे नवोदितश्चन्द्र इवाबभासे ॥ ७ ॥
तदङ्घ्रियुग्मस्य नखेन्दुकान्तिर्द्युदन्तिनो मूर्धनि विस्फुरन्ती ।
बभौ तदाक्रान्तिविभिन्नकुम्भस्थलोच्छलन्मौक्तिकमण्डलीव ॥ ८ ॥
अथाभिषेक्तुं सुरशैलमूर्ध्नि तमुद्वहंस्तीर्थकरं कराभ्याम् ।
पथा ग्रहाणां स गजाधिरूढश्चचाल सौधर्मपतिः[5] ससैन्यः ॥ ९ ॥
ध्वनत्सु तूर्येषु हरिप्रणीता स्तुतिस्तदाश्रावि सुरैर्न जैनी ।

---

१. निखिलजगत्प्रभुत्वम्. २. शचीम्. ३. शची. ४. ऐरावतस्य. ५. इन्द्रः.

मुहुस्तदारम्भचलाधरौष्ठप्रवाललीलाभिरवेदि किं तु ॥ १० ॥
अखण्डहेमाण्डकपुण्डरीकव्रजस्य दम्भात्त्रिदशोद्धृतस्य ।
[1]सुवर्णकुम्भान्स्वशिरोभिरुद्वहन्नियाय तस्य स्नपनाय शेषः ॥ ११ ॥
विधूयमानामरमण्डलीभिः प्रभोरुपान्ते सितचामराली ।
रराज रागोत्सुकमुक्तिमुक्तकटाक्षविक्षेपपरम्परेव ॥ १२ ॥
प्रदह्यमानागुरुधूमलेखाकरम्बितं व्योम बभौ तदानीम् ।
जिनस्य जन्माभिषवोत्सवार्थमिवागताशेषभुजंगलोकम् ॥ १३ ॥
तमिन्दुशुभ्रध्वजनिर्मलोर्मिः सितातपत्रस्फुटफेनपुञ्जः ।
सुरासुराणां निवहोऽभिषेक्तुं रराज दुग्धाब्धिरिवानुगच्छन् ॥ १४ ॥
बभौ पिशङ्गः कनकोज्ज्वलाभिः प्रभाभिरस्याभ्रमुजीवितेशः ।
प्रभुं तमायान्तमवेत्य भक्त्या स संमुखायात इवाद्रिराजः ॥ १५ ॥
सुधाप्रवाहैरिव हारिगीतैस्तरङ्गिते व्योममहाम्बुराशौ ।
भुजभ्रमोल्लासितलास्यलीलाछलात्प्लवन्ते स [2]मरुत्तरुण्यः ॥ १६ ॥
दिवोऽपि संदर्शितविभ्रमायाः सितैकवेणीमिव वृद्धमूर्तेः ।
स निर्जराणामधिपः पतन्तीं मुमोच दूरेण [3]सुरस्रवन्तीम् ॥ १७ ॥
स चित्रमन्तर्हितभानुकान्त्या प्रभोरमुष्योपरि मेघखण्डम् ।
सहेमकुम्भस्य बभार शोभां मयूरपत्रातपवारणस्य ॥ १८ ॥
प्रयाणवेगानिलकृष्यमाणा घना विमानानि तदानुजग्मुः ।
तदग्रवेदीमणिमण्डलांशुस्फुरन्मरुच्चापजिघृक्षयेव ॥ १९ ॥
स वारिधेरन्तरनन्तनालस्फुरद्धरित्रीवलयारविन्दे ।
उपर्यटत्षट्पदकर्णिकाभं ददर्श मेरुं सपयोदमिन्द्रः ॥ २० ॥
अधः कृतस्तावदनन्तलोकः श्रिया किमुच्चैस्त्रिदशालयो मे ।
[4]ईत्यस्य रोषादरुणाब्जनेत्रं भुवाभ्युदस्तास्यमिवेक्षणाय ॥ २१ ॥
परिस्फुरत्काञ्चनकायमाराद्विभावरीवासरयोर्भ्रमेण ।
विडम्बयन्तं नवदंपतीभ्यां परीयमाणानलपुञ्जलीलाम् ॥ २२ ॥

---

१. अयं वंशस्थवृत्तपादोऽत्र प्रमादापतित इति भाति. २. देवाङ्गनाः. ३. गङ्गाम्. ४. एतदुत्तरार्धमस्फुटम्.

रवीन्दुरम्योभयपार्श्वमन्तर्धृतेन्द्रनीलद्युति हेमकायम् ।
सचक्रशङ्खस्य पिशङ्गवस्त्रां त्रिविक्रमस्याकृतिमुद्वहन्तम् ॥ २३ ॥
घनानिलोत्थैः स्थलपङ्कजानां परागपूरैरुपबृंहिताग्रम् ।
मुहुर्जिनस्यापततोऽतिदूरादुदञ्चितग्रीवमिवेक्षणाय ॥ २४ ॥
दिगन्तरेभ्यो द्रुतमापतद्भिर्घनैर्घनाखण्डलचापचित्रैः ।
उपान्तरत्नप्रकरोपहारैर्धरै[1]रिवाद्रीन्द्रमुपास्यमानम् ॥ २५ ॥
सिताब्दरुद्धार्धहिरण्यदेहं शिरःस्फुरत्पाण्डुशिलार्धचन्द्रम् ।
कपालमालाललितोडुपङ्क्त्या धृतार्धनारीश्वरमूर्तिशोभम् ॥ २६ ॥
अमी भ्रमन्तो विततस्थलान्मे ग्रहा ग्रहीष्यन्ति सुवर्णकोटीः ।
इतीव तेषां प्रसरं निरोद्धुं घनानुपान्ते दधतं सचापान् ॥ २७ ॥
नितम्बिनीः संततमेव भा[2]स्वत्कराभिमृष्टोच्चपयोधराग्राः ।
समासजन्तं सरितां प्रवाहैस्तटीः क्षरत्स्वेदजलैरिवार्द्राः ॥ २८ ॥
असह्यहेतिप्रसरैः परेषां प्रभञ्जनात्प्राप्तहिरण्यलेशैः ।
महस्विसैन्यैः कटकेष्वटद्भिर्निषेवितं साधु महीधरेन्द्रम् ॥ २९ ॥
म[3]रुद्धनद्वंशमनेकता[4]लं र[5]सालसंभावितमन्मथैलम् ।
धृतस्मरातङ्कमिवाश्रयन्तं वनं च गानं च सुराङ्गनानाम् ॥ ३० ॥
तटैरुदञ्चन्मणिमण्डलांशुच्छटैरुदूढोच्छिखबर्हिशङ्काम् ।
सचेतसोऽपि प्रथयद्भिरुच्चैः प्र[6]तारितानेकबिडालपोतम् ॥ ३१ ॥
विशालद[7]न्तं ध[8]नदानवारिं प्रसारितोद्दामक[9]राग्रदण्डम् ।
उपेयुषो दिग्गजपुंगवस्य पुरो दधानं प्रतिमल्ललीलाम् ॥ ३२ ॥

---

१. पर्वतैः. २. भास्वन्तो देदीप्यमाना ये करा हस्ताः; (पक्षे) भास्वतः सूर्यस्य कराः किरणाः. ३. मरुतो देवाः; मरुद्वायुश्च. वंशो वंशीनामकं वाद्यम्; वेणुश्च. ४. तालः कालक्रियामानम्; वृक्षभेदश्च. ५. रसेन अलसं मन्थरम्. भाविता मन्मथस्य कामस्य एला गीतबन्धविशेषो येन; (पक्षे) रसालैराम्रैः संभाविता मन्मथा मदनसंज्ञका वृक्षविशेषा एलालताश्च यस्मिन्. ६. मणिकिरणेषु मयूरभ्रान्त्युत्पादनेन वञ्चितानेकमार्जारशिशुम्. ७. दन्तोऽद्रिकटकः; रदश्च. ८. घन-दान-वारिम्; (पक्षे) घन-दानव-अरिम्. ९. शुण्डादण्डम्; किरणाग्रदण्डं च.

अधिश्रियं नीरदमाश्रयन्तीं नवान्नुदन्तीमतिनिष्कलाभान् ।
स्वनैर्भुजंगाञ्शिखिनां दधानं प्रगल्भवेश्यामिव चन्दनालीम् ॥ ३३ ॥

गजभ्रमान्मुग्धमृगाधिनाथैर्विदार्यमाणान्नखरप्रहारैः ।
तडिच्छलान्निर्गलदस्रधारान्दधानमा मेखलमम्बुवाहान् ॥ ३४ ॥

जिनागमे प्राज्यमणिप्रभाभिः प्रभिन्नरोमाञ्चमिव प्रमोदात् ।
समीरणान्दोलदबालतालैर्भूजैरिवोल्लासितलास्यलीलम् ॥ ३५ ॥

अकृत्रिमैश्चैत्यगृहैर्जिनानां कृतः पवित्रोऽयमिति प्रयत्नात् ।
सुरेश्वरेणानमता प्रदत्तप्रतिष्ठयेवोच्छ्रिरसं महत्या ॥ ३६ ॥

विलङ्घ्य पन्थानमथामराणां पतिः स निष्कम्पचमूध्वजाग्रः ।
नितान्तवेगेन तमुत्सुकत्वात्किलागतं संमुखमाससाद ॥३७॥ (कुलकम्)

उपेयुषोऽनन्तपथाध्वनीनानेनसस्ताञ्शिरसा प्रतीच्छन् ।
निरन्तराया विबुधानुवृत्तेः फलं व्यनक्ति स्म तदामराद्रिः ॥ ३८ ॥

हरेर्द्विपो हारिहिरण्यकक्षः क्षरन्मदक्षालितशैलशृङ्गः ।
बभौ तडिद्दण्डविहारसारः शरत्तडित्वानिव तत्र वर्षन् ॥ ३९ ॥

सलीलमैरावणवामनाद्यैर्धृतानि यैरेव गजैर्जगन्ति ।
स्थिरं दधत्तानपि मूर्ध्नि मेरुर्धराधराख्यामधरीचकार ॥ ४० ॥

सविक्रमं क्रामति हास्तिके यन्ननाम नो नाम मनाग्गिरीन्द्रः ।
असंशयं सा जिनभक्तिरेव स्थिरा चकारास्य महाचलत्वम् ॥ ४१ ॥

मदेन मूर्धन्यमणिप्रभाभिर्विनिर्गतान्तस्तमसेव गण्डात् ।
निरुद्धदृष्टिप्रसराः सुराणां शनैः शनैर्गन्धगजाः प्रसस्रुः ॥ ४२ ॥

हिरण्यभूभृद्द्विरदैस्तदानीं मदाम्बुधाराস्नपितोत्तमाङ्गः ।
स दृष्टपूर्वोऽपि सुरासुराणामजीजनत्कज्जलशैलशङ्काम् ॥ ४३ ॥

---

१. लक्ष्मीयुक्तं नीरदं दन्तरहितमप्याश्रयन्तीं निष्कलाभमतिक्रान्तान्दरिद्रानिति यावत्. एतादृशान्नवांस्तरुणानपि भुजंगान्विटाञ्शिखिनां चूलाधारिदासविशेषाणां स्वनैः कटुभाषणैः करणभूतैर्नुदन्तीं निष्कासयन्तीम्, इति वेश्यापक्षे; चन्दनालीपक्षे तु नीरदं मेघम्, शिखिनां मयूराणां स्वनैरतिमलिनकान्तीन्भुजगान्नुदन्तीम्. २. निष्पापान्.

मदाञ्जनेनालिखितां गजेन्द्रैः सहेषमुत्क्षिप्तखुराग्रटङ्काः ।
हयाः किलाहार्यशिलासु[1] जैनीमिहोत्किरन्ति स्म यशःप्रशस्तिम् ॥४४॥
कशाञ्चनैः[2] किंचिदवाञ्चितास्याः पुरःप्रविष्टापरकायमश्वाः ।
इह प्लुतोल्लङ्घनवल्गनाद्यैर्मुदेव लास्यं पुरतोऽस्य चक्रुः ॥ ४५ ॥
कृतश्रमा ये नववीथिकासु तुरंगमाः साधितपञ्चधाराः[3] ।
इहोच्चनीचं चरणैस्त एव विलङ्घ्य चान्ये नभसीव जग्मुः ॥ ४६ ॥
दृढैस्तुरंगाग्रखुरप्रहारैरिहोच्छलन्तो ज्वलनस्फुलिङ्गाः ।
बभुर्विभिद्येव महीं विभिन्नफणीन्द्रमौलेरिव रत्नसंघाः ॥ ४७ ॥
समन्ततः काञ्चनभूमिभागास्तथा रथैश्चुक्षुदिरे[4] सुराणाम् ।
यथा विवस्वद्रथनेमिधारापथेऽरुणस्यापि मतिभ्रमोऽभूत् ॥ ४८ ॥
नितम्बमाघ्राय मदादुदञ्चच्छिरः समाकुञ्चितफुल्लघोणम् ।
अनुव्रजन्तं चमरीं महोक्षमिहारुणत्कष्टमहो महेशः ॥ ४९ ॥
द्युयोषितां कर्षितकुन्तलाग्राः स्तनोरुजङ्घाजघनं स्पृशन्तः ।
शनैरभीका[5] इव संविचेरुस्तरङ्गिणीतीरसरोजवाताः ॥ ५० ॥
वियोगनामापि न सोढुमीशं दिवः समुद्यानमिवावतीर्णम् ।
हरिः प्रपेदे सुमनोभिरामं वनं स तत्र पृथु पाण्डुकाख्यम् ॥ ५१ ॥
अथो जिनेन्द्रानुचराः सुराणामपास्तविस्तीर्णकुथच्छलेन ।
विचित्रकर्माचरणैरशेषैश्चिरादमुच्यन्त मतङ्गजेन्द्राः ॥ ५२ ॥
स वारितो[6] मत्तमरुद्द्विपौघः प्रसह्य कामश्रमशान्तिमिच्छन् ।
रजस्वला अप्यभजत्स्रवन्तीरहो मन्दान्धस्य कुतो विवेकः ॥ ५३ ॥
गजो न वन्यद्विपदानदिग्धं पपौ पिपासाकुलितोऽपि तोयम् ।
स्वजीवितेभ्योऽपि महोन्नतानामहो गरीयानभिमान एव ॥ ५४ ॥
करी करोत्क्षिप्तसरोरुहास्योच्छलन्निलीनालिकुलच्छलेन ।
कचेष्विवाकृष्य हठेन यान्तीं बुभोज वामामपि तां स्रवन्तीम् ॥ ५५ ॥

---

१. अहार्यः पर्वतः. २. वल्गाकर्षणैः. ३. अश्वस्य पञ्चविधा गतिर्धारेत्युच्यते.
४. क्षुण्णाः. ५. कामुकाः. ६. वारितो जलात्; (पक्षे) वारितो निषिद्धः.

अबालशैवालदलान्तरीयं व्युदस्य मध्यं स्पृशति द्विपेन्द्रे ।
तटाग्रभूमिर्जघनस्थलीव जलैरुदप्लावि वनापगायाः ॥ ५६ ॥
पयस्युदस्तोरुकरं निमज्ज्योर्द्विपाधिपस्योत्पतितं कपोलात् ।
उपर्यलीनां वलयं चकासे सदण्डनीलातपवारणाभम् ॥ ५७ ॥
विलासवत्याः सरितः प्रसङ्गमवाप्य विस्फारिपयोधरायाः ।
गजो ममज्जात्र कुतोऽथवा स्यान्महोदयः स्त्रीव्यसनालसानाम् ॥ ५८ ॥
दलानि संभोगभरार्पितानि नखक्षतानीव सरोरुहिण्याः ।
दधन्नदाम्भस्तलिनात्कथंचिदवातरल्लब्धरसो महेभः ॥ ५९ ॥
वनेऽत्र सप्तच्छदगन्धदत्तप्रतिद्विपभ्रान्तिविधूतवीतीन्[2] ।
प्रयुज्य सामैव शनैर्गजेन्द्रान्विनिन्युरालानपदं नयज्ञाः ॥ ६० ॥
निषादिने साधुनयप्रयुक्ताः स्वयं स्वकायाकलनाय वारीम्[3] ।
ददुर्महेभाः क्रियते कथं वा जडात्मकैरात्महितप्रवृत्तिः ॥ ६१ ॥
खलीनपर्याणमपास्य कृच्छ्रात्खुरैर्मुखारोपितवध्रनद्धाः ।
हयाननाहेषितदत्तकर्णा[4] विनिन्यिरेऽश्वा भुवि वेल्लनाय ॥ ६२ ॥
इतस्ततो लोलनभाजि वाजिन्यभिच्युताः फेनलवा विरेजुः ।
तदङ्गसङ्गत्रुटितोरुहारप्रकीर्णमुक्ताप्रकरा इवोर्व्याः ॥ ६३ ॥
नदान्मिलच्छैवलजालनीला निरीयुराक्रम्य पयस्तुरंगाः ।
दिनोदये व्योम समुत्पतन्तः पयोधिमध्यादिव हारिदश्वाः[5] ॥ ६४ ॥
इह क्षरन्निर्झरवारिहारिण्यनल्पकल्पद्रुणि कल्पनाथः[6] ।
निवेशयामास यथायथं स स्थलाम्बुशाखाचरवाहनानि ॥ ६५ ॥
तदादि भूमौ शिशुवक्रमाभ्यां सकौतुकं क्रामति नाकिचक्रे ।
बभार दृग्दोषनिषेधयित्रीं यमश्छविं कज्जललाञ्छनस्य[7] ॥ ६६ ॥

भूदेव्याः शिरसीव कुन्तलतुलालम्बिद्रुमश्यामले
लीलोत्तंसितकेतकीकिसलयस्योन्मुद्रयन्तीं द्युतिम् ।

---

१. शय्यातः. २. 'वीतिरङ्कुशकर्मणि.' ३. निजबन्धनरज्जुम्. ४ हयाननाः किंनर्यः. ५. सूर्यरथाश्वाः. ६. इन्द्रः. ७. बालकस्यापि मुखादिषु दृष्टिदोषनिवारणार्थं कज्जल-बिन्दुं कुर्वन्ति.

शृङ्गे स्वर्णगिरेः स धूर्जटिजटाजूटाग्रपिङ्गत्विषि
प्रेङ्खत्पाण्डुशिलां कलामिव विधोः कल्पाधिपः प्रैक्षत ॥ ६७ ॥
संसारार्तिमिव व्यतीत्य पदवीं शुक्लेन दिग्दन्तिना
ध्यानेनेव महीभृतस्त्रिभुवनस्येवास्य मूर्ध्नि स्थितम् ।
तां कैवल्यशिलामिवार्धरजनीप्राणाधिनाथाकृतिं[1]
प्राप्यार्हन्निरतो व्रतीव समभूदाखण्डलो निर्वृतः[2] ॥ ६८ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये सप्तमः सर्गः ।

---

अष्टमः सर्गः ।

अथ सरभसमस्यां न्यस्तविस्तीर्णभास्व-
न्मणिमयहरिपीठे निर्भरोत्साहयोगः ।
शरभमिव हिमाद्रेरभ्रमातङ्गकुम्भा-
ज्जिनपतिमवतार्य स्थापयामास जिष्णुः ॥ १ ॥
मदनभिदमधास्यन्नूनमेनं न मूर्ध्ना
यदि कथमपि शेषस्तच्छिलापद्मवेषः ।
अपि मृदुलमृणाली कोमलस्तद्दुरापां
स कथमितरथाप्स्यत्क्ष्माभरोद्धारकीर्तिम् ॥ २ ॥
किमतनुतरपुण्यैः स्विद्यशोभिः स्वयं वा
निजसमयसमेतैरूर्मिभिः क्षीरसिन्धोः ।
इति सुरपरिपाट्या शङ्कमानैः शिलायाः
शिरसि सितमयूखैः श्लिष्यमाणः स रेजे ॥ ३ ॥
अनुगुणमनुभावस्यानुरूपं विभूतेः
समुचितमनुवृत्तेर्देशकालानुकूलम् ।
अविकलमकलङ्कं निस्तुलं तस्य भर्तुः
स्नपनविधिममर्त्याः प्रारभन्ते स्म तस्मिन् ॥ ४ ॥

---

१. अर्धचन्द्राकृतिम्. २. मुक्तः; संतुष्टश्च.

अवकरनिकुरम्बे मारुतेनापनीते
कुरुत घनकुमाराः साधु गन्धोदवृष्टिम् ।
तदनु च मणिमुक्ताभङ्गरङ्गावलीभि-
र्विरचयत चतुष्कं सत्वरं दिक्कुमार्यः ॥ ५ ॥
स्वयमयमिह धत्ते छत्रमीशाननाथ-
स्तदनुगतमृगाक्ष्यो मङ्गलान्युत्क्षिपन्तु ।
जिनसविधममर्त्या नर्तिता बालवाल-
व्यजनविधिसनाथाः सन्तु सानत्कुमाराः ॥ ६ ॥
वलिफलकुसुमस्रग्गन्धधूपाक्षताद्यैः
प्रगुणयत विचित्राण्यन्नपात्राणि देव्यः ।
सलिलमिह पयोधेरेष्यति व्यन्तराद्याः
पटुपटहमृदङ्गादीनि तत्सज्जयन्तु ॥ ७ ॥
प्रवणय वरवीणां वाणि रीणासि कस्मा-
त्किमपरमिह ताले तुम्बरो त्वं वरोऽसि ।
इह हि भरत रङ्गाचार्य विस्तार्य रङ्गं
त्वरयसि नटनार्थं किं न रम्भामदम्भाम् ॥ ८ ॥
समुचितमिति कृत्यं जैनजन्माभिषेके
त्रिदशपतिनियोगाद्वाहयन्नाग्रहेण ।
कलितकनकदण्डोद्दण्डदोर्दण्डचण्डः
सुरनिवहमवादीद्द्वारपालः कुबेरः ॥ ९ ॥ (कुलकम्)
बहलमलयजन्मोन्मिश्रकर्पूरपांसु-
प्रसरपरिमलान्धाः श्रेणयः षट्पदानाम् ।
जिनपतिमभिषेक्तुं वाञ्छतां त्रुट्यदेनो-
निगलवलयतुल्या निर्लुठन्ति स्म तस्मिन् ॥ १० ॥
अयमतिशयवृद्धो निम्नगानामधीशः
कथमिममधिरोहत्वम्बुनाथो नगेन्द्रम् ।

१. हे बालमेघाः. २. मङ्गलान्यष्टौ दर्पणदूर्वादध्यक्षतादीनि. ३. रीणा खिन्ना.

इति तमुपरि मेरोर्नेतुमुत्क्षिप्य देवाः
कलितकनककुम्भामारभन्ते स्म पङ्क्तिम् ॥ ११ ॥
अभिनवमणिमुक्ताशङ्खशुक्तिप्रवाल-
प्रभृतिकमतिलोलैर्दर्शयन्नूर्मिहस्तैः ।
जडजठरतयैक्षि व्याकुलो मुक्तकच्छः
स्थविरवणिगिवाग्रे स्वर्गिभिः क्षीरसिन्धुः ॥ १२ ॥
उपचितमतिमात्रं वाहिनीनां सहस्रैः
पृथुलहरिसमूहैः क्रान्तदिक्चक्रवालम् ।
अकलुषतरवारिक्रोडमज्जन्महीध्रं
नृपमिव विजिगीषुं मेनिरे ते पयोधिम् ॥ १३ ॥
अनुगतभुजगेन्द्रान्मन्दराद्रीनिवोच्चै-
र्दधतममलमुक्तामालिनः स्वर्णकुम्भान् ।
सुरनिकरमुपेतं वारिधिर्वीक्ष्य भूयो-
ऽप्यतिमथनभियेव व्याकुलोर्मिश्चकम्पे ॥ १४ ॥
उदधिनिहितनेत्रान्वीक्ष्य वाग्विभ्रमाणां
निधिरमृतभुजस्तान्पालकः केलिपात्रम् ।
विहितमुदमवोचद्वाचमेतामनुक्तो-
ऽप्यवसरमुखरत्वं प्रीतये कस्य न स्यात् ॥ १५ ॥
नियतमयमुदञ्चद्वीचिमालाछलेनो-
च्छलति जलदमार्गे ज्ञातजैनाभिषेकः ।
तदनु जडतयोच्चैर्नाधिरोढुं समर्थः
पतति पुनरधस्तात्सागरः किं करोतु ॥ १६ ॥
प्रशमयितुमिवार्तिं दुर्वहामौर्ववह्ने-
र्यदधिरजनि चान्द्रीः शीलयामास भासः ।

---

१. पूर्णागाधमध्यभावेन स्थूलोदरत्वेन च दृष्टः. २. नदीनाम्; सेनानां च. ३. पृथु-लहरिसमूहैः; (पक्षे) पृथुल-हरिसमूहैः. हरयोऽश्वाः. ४. अकलुषतरं वारि जलम्; (पक्षे) तरवारिः खड्गः.

तदयमिति मतिर्मे क्षीरसिन्धुर्जनाना-

मजनि हृदयहारी हारनीहारगौरः ॥ १७ ॥

द्विरदतरुतुरंगश्रीसुधाकौस्तुभाद्याः

कति कति न ममार्था हन्त धूर्तैर्गृहीताः ।

इति मुहुरयमुर्वीं ताडयन्नूर्मिहस्तैः

ग्रहि[1]ल इव विरावैः सागरो रोरवीति ॥ १८ ॥

पवनजववशेनोत्पत्य दूरं पतन्तो

जलधिजलतरङ्गाः कम्बुकिर्मीरभासः ।

उपरि विततमुक्तासंग्रहोत्तालबुद्ध्या

झटिति कलिततारामण्डला वा[2] विभान्ति ॥ १९ ॥

[3]घनतरतरुणाढ्येनात्र देशे न केना-

प्यतिगुरुगिरिणा वा दुर्निवारप्रचाराः ।

स्वयमिममभिसस्रुर्यत्समस्ताः स्रवन्त्यो

निरुपममिदमस्मादस्य सौभाग्यमब्धेः ॥ २० ॥

अयमुपरि सविद्युत्तोयमादातुमब्धे-

र्व्यतिषजति तमालश्यामलो वारिवाहः ।

तुहिनकिरणकान्तं कान्तया श्लिष्यमाणः

शिशयिषुरिव शौरिः शेषपर्यङ्कपृष्ठम् ॥ २१ ॥

[4]स्फुटकुमुदपरागः सागरो मातरं नः

क्षितिमहह कदाचित्प्लावयिष्यत्यशेषाम् ।

इति किल जलवेगं रोद्धुमाबद्धमालाः

कथमपि तटमस्य क्ष्मारुहो न त्यजन्ति ॥ २२ ॥

रतिविरतिषु वेलाकानने किंनरीभिः

पुलकितकुचकुम्भोत्तम्भमासेव्यतेऽस्मिन् ।

---

१. उन्मत्तः. २. वा इवार्थे. ३. प्रचुरतरवृक्षेण समृद्धेन; (पक्षे) बहुभिस्तरुणैराढ्येन.
४. विकसितकुमुदवच्छ्वेतः; (पक्षे) कुमुत् भूमेर्हर्षस्तेनापरागो बद्धमत्सरः.

चपलकलभलीलाभिन्नकङ्कोलकैला-
परिमलमिलितालिध्वानधीरः समीरः ॥ २३ ॥
अयमिह जटिलोर्मिर्भाति कङ्केल्लिवल्ली-
किसलयललिताभिर्विद्रुमाणां लताभिः ।
ज्वलिततनुरिवान्तर्वाडवाग्नेः शिखानां
विततिभिर्[1]रतिगाध्योत्साहबंहीयसीभिः ॥ २४ ॥
इह हि मिलितरङ्गत्प्रौढसिन्धुप्रियायाः
पुलिनजघनरङ्गोत्सङ्गसङ्गात्पयोधिः ।
सरभसमुपकूजत्कुक्कुह[2]क्काणदम्भा-
न्मसृणमणित[3]लीलोल्लासमभ्यस्यतीव ॥ २५ ॥
सकलजगदधृष्यस्यैकगाम्भीर्यभाजो
बहुलहरि[4]युतस्य प्रोल्लसत्कङ्कण[5]स्य ।
इति निगदति तस्मिन्नाकिलोकस्य तस्या-
प्यजनि सलिलराशेरन्तरं नैव किंचित् ॥ २६ ॥
सुरसमिति[6]रसंख्यैः क्षीरपाथोधिनीरं
यदुरुकनककुम्भैरुच्चुलुम्यांचकार ।
चुलुककलितवार्धेः स्मारयामास नश्य-
द्वरुणनगरनारीस्तेन कुम्भोद्भवस्य ॥ २७ ॥
स्नपनविधिनिमित्तोपात्तपानीयपूर्णाः
सपदि दिवमुदीयुः शातकुम्भीयकुम्भाः ।
दृषद इव तदन्ये यच्च रिक्ता निपेतुः
प्रकटमिह फलं तज्जैनमार्गानुवृत्तेः ॥ २८ ॥
अनुगतभुजमालालीलयारभ्यमाणै-
र्मणिघटपरिवर्तावर्तनैः क्षीरसिन्धोः ।

---

१. अतितृष्णासंयोगदीर्घतमाभिः. २. कुक्कुहो जलपक्षिविशेषः. ३. 'मणितं रतिकूजितम्'. ४. बहु-लहरि; (पक्षे) बहुल-हरि. ५. कङ्कणं करभूषणम्; जलकणश्च. ६. देवसमूहः.

उदकमुपनयद्भिर्देववृन्दैस्तदानी-
मभिनवमभिनीतं वार्घटीयन्त्रचक्रम्[1] ॥ २९ ॥

घन[2]सुषिरततानामुद्धुरानद्धनादे
तिरयति रवमुच्चैर्भिन्नभूमीध्ररन्ध्रे ।
प्रसरति नवनाट्यप्रक्वणत्किङ्किणीना-
ममरसहचरीणां मङ्गलोद्गाररावे ॥ ३० ॥

कलुषमिह विपक्षं दर्शनादेव जित्वा
स्वगुणगरिमहेलाक्रान्तसिंहासनस्य ।
प्रथमममरनाथा भूत्रयस्येव राज्ये
कनककलशतोयैश्चक्रुरस्याभिषेकम् ॥ ३१ ॥ (युग्मम्)

जरठविशदकन्दप्रोज्ज्वलायां शिलायां
प्रचलदरुणमुग्धस्निग्धपाणिप्रवालः ।
अमृतमधुरनीरैः सिच्यमानः स देवै-
रभिनव इव रेजे पुण्यवल्लीप्ररोहः ॥ ३२ ॥

हिमगिरिमिव मेरुं नीरपूरैः सृजद्भिः
स्नपयितुमपि पृथ्वीमाशु पृथ्वीं समर्थैः ।
शिशुरपि जिननाथश्चुक्षुभे नो मनाग-
प्यहह सहजधैर्यं दुर्निवार्यं जिनानाम् ॥ ३३ ॥

यदधरितसुधौघैरर्हतः स्नानतोयैः
सममसमसमृद्ध्यानेनिजुः[3] श्रद्धयाङ्गम् ।
जगति खलु जरायां सर्वसाधारणायां
तदसुलभममर्त्या भेजिरे निर्जरत्वम् ॥ ३४ ॥

नटदमरवधूनां दृक्कटाक्षच्छटाभाः
कनकरुचिकपोले तीर्थकर्तुः स्फुरन्तीः ।

---

१. वार्घटीयन्त्रमरघट्ट इति प्रसिद्धम्. २. 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥' इत्यमरः. ३. अनेनिजुरक्षालयन्.

स्नपनसलिलशेषाशङ्कया मार्जयन्ती
व्यधित हरिपुरंध्री कस्य न स्मेरमास्यम् ॥ ३५ ॥
विशदमणिमयाभ्यां वज्रसूचीविभिन्न-
श्रवणयुगमिताभ्यां[1] कुण्डलाभ्यां स रेजे ।
किमपि समधिगन्तुं तत्त्वविद्यारहस्यं
सुरगुरुभृगुपुत्राभ्यामिव ज्ञानसिन्धुः ॥ ३६ ॥
त्रिगुणवलितमुक्तातारहारापदेशा-
दुरसि वरणमालाः प्रक्षिपन्त्यस्तदानीम् ।
अहमहमिकयोर्वी श्रीश्च मुक्तिश्च तिस्रः
स्वयमपि वृणते स्म प्रेमवत्यस्तमेकम् ॥ ३७ ॥
निरुपममणिमाला तन्मुखेन्दोरुपान्ते
विगलदमृतधाराकारमुन्मुद्रयन्ती ।
शशिनममलकान्त्याक्रम्य बन्दीकृतानां
विततिरिव विरेजे तत्प्रियाणामुडूनाम् ॥ ३८ ॥
मणिमयकटकाग्रप्रोतरत्नग्रहश्रीः
स घनकनककाञ्चीमण्डलाभोगरम्यः ।
त्रिदशरचितभूषाविभ्रमो हेमगौरः
कनकगिरिरिवान्यो मेरुशृङ्गे रराज ॥ ३९ ॥
ध्रुवमिह भवितायं धर्मतीर्थस्य नेता
स्फुटमिति स मघोना धर्मनाम्नाभ्यधायि ।
न खलु मतिविकासादर्शदृष्टाखिलार्थाः
कथमपि वितथार्थां वाचमाचक्षते ते ॥ ४० ॥
किमपि मृदुमृदङ्गध्वानविच्छेदमूर्छ-
च्छ्रुतिसुखसुषिरास्यप्रस्वनोल्लासिलास्ये ।
परिणमति सुधात्माधीनगन्धर्वगीते
व्यतिकरपरिरम्भे तत्र तौर्यत्रिकस्य ॥ ४१ ॥

---

१. प्राप्ताभ्याम्.

दलितकमठपृष्ठं चारुचारीप्रयोगै-
　　र्भ्रमितभुजनिरस्तस्रस्तविस्तारितारम् ।
प्रकटघटितलिङ्गाकारमावर्तवृत्त्या
　　प्रमदविवशमिन्द्रैस्तत्पुरस्तादनर्ति ॥ ४२ ॥ (युग्मम्)

इति निरुपमभक्तिं शक्तिमप्यात्मनीनां
　　स्नपनविनययुक्त्या व्यक्तयन्तः सुरेन्द्राः ।
स्तुतिभिरवितथाभिः स्तुत्यमेनं समस्ताः
　　शिरसि निहितहस्ताः स्तोतुमारेभिरे ते ॥ ४३ ॥

अखिलमलिनपक्षं पूर्वपक्षे निधाय
　　प्रथममुदितमात्रस्यापि संपूर्णमूर्तेः ।
जिनवर तव कान्त्या यत्कलामात्रशेषः
　　प्रतिपदमृतभानुः स्पर्धते तन्मुधैव ॥ ४४ ॥

मुनिभिरमलबोधैरप्यशक्यासु कर्तुं
　　स्तुतिषु तव गुणानामप्रगल्भप्रभेव ।
वरद मुहुरमन्दानन्दसंदोहदम्भा-
　　त्स्खलति गलगुहान्तर्निर्भरं भारती नः ॥ ४५ ॥

स्पृशति किमपि चेतश्चुम्बकग्रावगत्या
　　त्वयि जिन जनतायाः स्वस्वकार्योद्यतायाः ।
किमु कुतुकमपूर्वं नाथ यत्पूर्वजन्म-
　　व्रजवृजिनघनायःशृङ्खला निर्गलन्ति ॥ ४६ ॥

अमितगुणगणानां त्वद्गतानां प्रमाणं
　　भवति समधिगन्तुं यस्य कस्यापि वाञ्छा ।
प्रथममपि स तावद्व्योम कत्यङ्गुलानी-
　　त्यनघ सुगमसंख्याभ्यासमङ्गीकरोतु ॥ ४७ ॥

मनुज इति मुनीनां नायकं नाकिनाम-
　　प्यवगणयति यस्त्वां निर्विवेकः स एकः ।

सकलविदकलङ्कः क्षीणसंसारशङ्क-
श्चकितजनशरण्यः कस्त्रिलोक्यां त्वदन्यः ॥ ४८ ॥

न खलु तदपि चित्रं यत्त्वयोदेष्यतापि
प्रथममयमकारि प्राप्तपुण्यो जनोऽत्र ।
प्रतिशिखरि वनानि ग्रीष्ममध्येऽपि कुर्या-
त्किमु न जलदकालः प्रोल्लसत्पल्लवानि ॥ ४९ ॥

तव [1]वृषमधिरूढो योऽपि तस्य द्युलोकः
स खलु कियति दूरे [2]यो जनेनापि लभ्यः ।
यदि [3]चतुरगमाप्तः प्राप्तवांस्तद्दुरापं
तदपि जिन जनोऽयं जन्मकान्तारतीरम् ॥ ५० ॥

सर इव मरुमार्गे स्वच्छतोयं तृषार्तै-
स्तरुरिव रविरश्मिव्याकुलैरत्र सान्द्रः ।
निधिरिव चिरदुःस्थैः शर्मणेऽस्माभिरेकः
कथमपि भवभीतैर्नाथ दृष्टोऽसि दिष्ट्या ॥ ५१ ॥

स्वगुणगरिमदौःस्थ्यं रोदसी रन्ध्ररोषा-
द्व्यतिषजति जिनेश त्वद्यशश्चन्द्रगौरम् ।
कथय कथममन्दां मन्दिरोद्योतशक्तिं
प्रकटयति घटान्तर्वर्तिरूपः प्रदीपः ॥ ५२ ॥

गुणपरिकरमुच्चैः कुर्वतैव त्वयैते
क्षपितकलुषदोषा रोषितास्तद्विपक्षाः ।
अथ न कथममीषां नेक्ष्यते त्वद्द्वयेन
त्वदनुगतजनेऽपि प्रायशः प्रीतिलेशः ॥ ५३ ॥

इह पिहितपदार्थे सर्वथैकान्तवल्ग-
न्निविडतमतमोभिर्विश्ववेश्मन्यकस्मात् ।

---

१. वृषं धर्मम्; (पक्षे) वृषभम्. २. यः जनेन; (पक्षे) योजनेन क्रोशचतुष्टयात्मकेन. ३. चतुरगं चारित्रभारम्; (पक्षे) तुरगम्.

त्वमसि स खलु दीपः केवलालोकहेतुः
शलभसुलभलीलां लप्स्यते यत्र कामः ॥ ९४ ॥
अलमलममृतेनास्वादितं त्वद्वचश्चे-
त्किममरतरुलक्ष्म्या त्वय्यपि प्रार्थ्यमाने ।
जिन जगदतमस्कं कुर्वति त्वत्प्रबोधे
किमहिमरुचिना वा कार्यमत्रेन्दुना वा ॥ ९५ ॥
दुरितमुदितं पाकोद्रेकात्पुराकृतकर्मणां
झटिति घटयत्यर्हद्भक्तेः स्वशक्तिविपर्ययम् ।
उपजलतरुच्छायाछन्ने जने जरठीभव-
द्द्युमणिकिरणैर्भीष्मो ग्रीष्मो न किं शिशिरायते ॥ ९६ ॥
इत्याराध्य त्रिभुवनगुरुं तत्र जन्माभिषेके
भक्त्या मातुः पुनरपि तमुत्सङ्गभाजं विधाय ।
भूयो भूयस्तदमलगुणग्रामवार्ताभिरुच्च-
र्लोमानस्ते त्रिदशपतयः स्वानि धामानि जग्मुः ॥ ९७ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्येऽष्टमः सर्गः ।

---

## नवमः सर्गः ।

सिक्तः सुरैरित्थमुपेत्य विस्फुरज्जटालवालोऽथ स नन्दनद्रुमः ।
छायां दधत्काञ्चनसुन्दरीं नवां सुखाय वप्तुः सुतरामजायत ॥ १ ॥
चित्रं किमेतज्जिनयामिनीपतिर्यथा यथा वृद्धिमनश्वरीमगात् ।
सीमानमुल्लङ्घ्य तथा तथाखिलं प्रमोदवार्धिर्जगदप्यपूरयत् ॥ २ ॥
लप्स्यामहे तीर्णभवार्णवं पुनर्विवेकिनं कैनमितीव तं प्रभुम् ।
बाल्याङ्गसंस्कारविशेषसत्क्रियाः किमप्यहंपूर्विकया सिषेविरे ॥ ३ ॥
लोकस्त्रिलोक्यां सकलोऽपि सप्रभः प्रभावसंभावितमेकमर्भकम् ।
ज्योतिर्ग्रहाणामिव मण्डलो ध्रुवं ध्रुवं समन्तादनुवर्तते स्म तम् ॥ ४ ॥

---

१. जटाला जटायुक्ता बालाः केशा यस्य; (पक्षे) जटा मूलम्, आलवालमावालः.
२. कांचन अनिर्वचनीयाम्; (पक्षे) काञ्चनवत्सुन्दरीम्. ३. पितुः; मालाकारादेश्च.

तैस्तैस्त्रिसंध्यं मणिभूषणैः प्रभुं तमेकमेवोपचचार वासवः।
को वा दुरापां समवाप्य संपदं विचक्षणः क्षेमविधौ विमुह्यति ॥ ५ ॥
औत्सुक्यनुन्ना शिशुमप्यसंशयं चुचुम्ब मुक्तिर्निभृतं कपोलयोः।
माणिक्यताटङ्ककरापदेशतस्तथाहि ताम्बूलरसोऽत्र संगतः ॥ ६ ॥
प्राच्या इवोत्थाय स मातुरङ्कतः कृतावलम्बो गुरुणा महीभृता।
भून्यस्तपादः सवितेव बालकश्चचाल वाचालितकिङ्किणीद्विजः ॥ ७ ॥
रिङ्खन्पदाक्रान्तमहीतले बभौ स्फुरन्नखांशुप्रकरेण स प्रभुः।
शेषस्य बाधाविधुरेऽस्य धावता कुटुम्बकेनेव निषेवितक्रमः ॥ ८ ॥
बभ्राम पूर्वं सुविलम्बमन्थरप्रवेपमानाग्रपदं स बालकः।
विश्वंभरायां पदभारधारणप्रगल्भतामाकलयन्निव प्रभुः ॥ ९ ॥
पुत्रस्य तस्याङ्गसमागमक्षणे निमीलयन्नेत्रयुगं नृपो बभौ।
अन्तः कियद्गाढनिपीडनाद्वपुः प्रविष्टमस्येति निरूपयन्निव ॥ १० ॥
उत्सङ्गमारोप्य तमङ्गजं नृपः परिष्वजन्मीलितलोचनो बभौ।
अन्तर्विनिक्षिप्य सुखं वपुर्गृहे कपाटयोः संघटयन्निव द्वयम् ॥ ११ ॥
चित्रं प्रचिक्रीड यथा यथा करप्रकीर्णपांसुप्रकरैः कुमारकैः।
आदर्शवन्निर्मल एव सोऽभवत्तथा तथान्तःफलितावनीत्रयः ॥ १२ ॥
कः पण्डितो नाम शिखण्डमण्डने मराललीलागतिदीक्षकोऽथवा।
नैसर्गिकज्ञाननिधेर्जगद्गुरोर्गुरुश्च शिक्षासु बभूव तस्य कः ॥ १३ ॥
शस्त्रेषु शास्त्रेषु कलासु चाभवन्मनीषिणां यश्चिरसंचितो मदः।
ज्ञानापणे तत्र पुरः स्थितेऽगलच्छरीरतः स्वेदजलच्छलेन सः ॥ १४ ॥
बाल्यं व्यतिक्रम्य समुन्नतिं क्रमाद्दधत्समस्तावयवानुवर्तिनीम्।
लक्ष्मीं स निःशेषकलाजुषस्तदा पुपोष पीयूषमयूखमालिनः ॥ १५ ॥
मध्यंदिनेनेव सहस्रदीधितेर्महाध्वराग्नेर्हविषेव भूयसा।
बाल्यव्यपायेन किमप्यपूर्ववज्जिनस्य नैसर्गिकमप्यभून्महः ॥ १६ ॥
तस्योद्धृताद्रिर्दशकंधरो मुदे वहन्न येनैक्षि महीमहीश्वरः।
नाश्चर्यकृत्तस्य बभूव तद्द्वयं स येन दृष्टस्त्रिजगद्धुरंधरः ॥ १७ ॥

चक्राब्जशङ्खादिविलोकनोत्थया स्वकान्तसंकेतनिवासशङ्कया ।
मन्ये न लक्ष्मीर्नवपल्लवारुणं तदङ्घ्रिपङ्केरुहयुग्ममत्यजत् ॥ १८ ॥
उद्यत्पदाङ्गुष्ठनखांशुदण्डिकाप्रकाण्डगर्भं युगमस्य जङ्घयोः ।
कार्तस्वरस्तम्भविशेषशालिनीं जहास दोलां नवधर्मसंपदः ॥ १९ ॥
अत्यन्तमव्याहतवेगवीर्ययोर्जगत्त्रयीनेत्रमनोगजेन्द्रयोः ।
स्तम्भाविवोरूदृढबन्धहेतवे व्यधायिषातां ध्रुवमस्य वेधसा ॥ २० ॥
कण्ठीरवेणेव नितान्तमुन्नतं नितम्बबिम्बं परिणाहि बिभ्रता ।
एनोमयी तेन जनस्य दर्शनात्प्रमत्तमातङ्गघटाविघट्टिता ॥ २१ ॥
तस्तो ध्रुवं प्राग्जिननाभिपल्वले विवेश दानोद्धुरधर्मसिन्धुरः ।
समुल्लसल्लोमलतापदेशतो मदाम्बुधारा कथमन्यथा तटे ॥ २२ ॥
लक्ष्मीरिहान्तःपुरसुन्दरी चिरं गुणैः सह स्थास्यति सौविदल्लकैः ।
जानन्निवास्य मनोहितं विधिर्व्यधाद्विशालं हृदयं दयावतः ॥ २३ ॥
तस्यैकमुच्चैर्भुजशीर्षमुद्वहन्सहेलमालम्बितभूत्रयो भुजः ।
भूभारनिर्युक्तशिरःसहस्रकं फणीश्वरं दूरमधश्चकार सः ॥ २४ ॥
रेखात्रयेणेव जगत्त्रयाधिकां निरूपयन्तं निजरूपसंपदम् ।
तत्कण्ठमालोक्य ममज्ज लज्जया विशीर्यमाणः किल कम्बुरम्बुधौ॥२५॥
यन्निस्तुलेनापि तदाननेन्दुना व्यधात्तुलारोहणमुग्रपातकम् ।
अद्यापि हेमद्युतिरुद्यतस्ततो भवत्यसौ श्वित्रविपाण्डुरः शशी ॥ २६ ॥
स्निग्धा बभुर्मूर्धनि तस्य कुन्तलाः कलिन्दकन्याम्बुतरङ्गभङ्गुराः ।
फुल्लाननाम्भोरुहि सारसौरभे निलीननिःशब्दमधुव्रता इव ॥ २७ ॥
वज्राब्जसारैरिव वेधसा कृतं तमास्पदं विक्रमसौकुमार्ययोः ।
उर्व्याः करं ग्राहयितुं न केवलं बभूव वध्वा अपि वप्तुराग्रहः ॥ २८ ॥
तं यौवराज्ये नयशीलशालिनं व्यधात्तनूजं नवयौवनं नृपः ।
प्रागेव लोकत्रयराज्यसंपदां निधानमेनं न विवेद भूपतिः ॥ २९ ॥
तस्मिन्गुणैरेव नियम्य कुर्वति प्रकाममाज्ञावशवर्तिनः परान् ।
आसीन्नृपोऽन्तःपुरसारसुन्दरीविलासलीलारसिकः स केवलम् ॥ ३० ॥

---

१. पितुः.

शृङ्गारवत्या दुहितुः स्वयंवरे प्रतापराजेन विदर्भभूभुजा ।
दूतः कुमारानयनार्थमीरितः समाययौ रत्नपुरप्रभोर्गृहम् ॥ ३१ ॥
भर्तुः प्रतीहारनिवेदितस्ततः प्रविश्य संसद्गृहमाहितानतिः ।
भ्रूभेददत्तावसरः स कर्णयोः क्षरत्सुधासारमुवाच वाचिकम् ॥ ३२ ॥
किं चाग्रतस्तेन निरीक्ष्य भूपतेः कुमारमाकारविनिर्जितस्मरम् ।
तद्रूपशोभासुभगोऽस्य दर्शितो जगन्मनोलुण्ठनलम्पटः पटः ॥ ३३ ॥
पीयूषधारागृहमत्र नेत्रयोर्निरीक्ष्य कन्याप्रतिबिम्बमद्भुतम् ।
किं तथ्यमित्थं भवितेति चिन्तयन्पुरो नृपः श्लोकमिमं व्यलोकयत् ३४
अस्याः स्वरूपं कथमेणचक्षुषो यथावदन्यो लिखितुं प्रगल्भताम् ।
धातापि यस्याः प्रतिरूपनिर्मितौ घुणाक्षरन्यायकृताकृतेर्जडः ॥ ३५ ॥
ततोऽधिकं विस्मितमानसो नृपः सुतस्य तस्याश्च विलोक्य विग्रहम् ।
तच्चारुरूपासवपानघूर्णितोत्तमाङ्गसंसूचितमित्यचिन्तयत् ॥ ३६ ॥
यः स्वप्नविज्ञानगतेरगोचरश्चरन्ति नो यत्र गिरः कवेरपि ।
यं नानुबध्नन्ति मनःप्रवृत्तयः स हेलयार्थो विधिनैव साध्यते ॥ ३७ ॥
क्वायं जगल्लोचनवल्लभो युवा क्व कन्यकारत्नमतर्क्यमीदृशम् ।
तत्सर्वथा दुर्घटकर्मनिर्मितिप्रगल्भ्यमानाय नमोऽस्तु वेधसे ॥ ३८ ॥
नूनं विहायैनमियं स्वयंवरे वरार्थिनी नापरमर्थयिष्यति ।
इन्दुं सदानन्दविधायिनं विना किमन्यमन्वेति कदापि कौमुदी ॥३९॥
यत्कन्यकायामुपवर्ण्यते बुधैः कुलं च शीलं च वयश्च किंचन ।
सर्वत्र संबन्धविधानकारणं प्रियस्य तत्प्रेम गुणैर्विशिष्यते ॥ ४० ॥
प्रत्यङ्गलावण्यविलोकनोत्सुकः कृतस्पृहोऽस्यां युवराजकुञ्जरः ।
दृष्ट्यापि रागोल्बणया विभाव्यते करो यथान्तर्मददर्पदुःसहः ॥ ४१ ॥
इत्थं विचिन्त्यैष कृतार्थनिर्णयो नृपः सुतं दारपरिग्रहक्षमम् ।
प्रस्थापयामास ससैन्यमादराद्विदर्भभूवल्लभपालितां पुरीम् ॥ ४२ ॥
राजा च दूतेन च तेन चोदितस्ततो ध्वजिन्या च मुदा च संयुतः ।
रूपेण चास्यास्त्वरितस्मरेण च प्रभुः प्रतस्थे स विदर्भमण्डलम् ॥ ४३ ॥

शोभां स बिभ्रत्[1]करवालशालिनीं [2]सुवर्णसारं [3]कटकं प्रकाशयन् ।
भव्यं च भीमं च तदा प्रसाधनं बभार [4]नारीहितपूरणक्षमम् ॥ ४४ ॥

दन्तीन्द्रमारुह्य स दानभोगवान्पथि प्रवृत्तश्च गुरोरनुज्ञया ।
शोभामसंप्राप्तसहस्रचक्षुषः पुरंदरस्यानुचकार सुन्दरीम् ॥ ४५ ॥

धुन्वन्निवोर्वीं दलयन्निवाम्बरं गिलन्निवाशाश्चलयन्निवाचलान् ।
प्रस्थानशंसी पटहध्वनिस्तदा समुज्जजृम्भे जगदाक्षिपन्निव ॥ ४६ ॥

ओंकारवत्प्रस्तुतमङ्गलश्रुतेः समुत्थिते व्योमनि शङ्खनिःस्वने ।
कण्ठेऽपतद्द्युप्रसवच्छलात्प्रभोः स्वयंवरस्रङ्निहितैव कान्तया ॥४७॥

राज्ञा प्रयुक्ताः स्वयमाहितौजसः समर्पितालंकृतयः क्षितीश्वराः ।
तं साधुशब्दा इव साध्यसिद्धये मनश्चमत्कारिणमर्थमन्वयुः ॥ ४८ ॥

भद्राश्च मन्दाश्च मृगाश्च केऽपि ये नदीगिरीन्द्रोभयवर्त्मचारिणः ।
ते तस्य संकीर्णसमन्विताः पुरो बभूवुरैरावतवंशजा गजाः ॥ ४९ ॥

काम्बोजवानायुजबाह्लिका हयाः सपारसीकाः पथि चित्रचारिणः ।
शैलूषसभ्या इव दृष्टिनर्तकीमनर्तयन्नृत्यविचक्षणाः प्रभोः ॥ ५० ॥

तां नेत्रपेयां विनिशम्य सुन्दरीं [5]सुधामलङ्कामयमान उत्सुकः ।
क्रामन्[6]नपाचीं [7]हरिसेनया वृतो बभौ स काकुत्स्थ इव[8]ास्तदूषणः ॥५१॥

कल्पद्रुचिन्तामणिकामधेनवस्तटेऽपि मग्नाः खलु दानवारिधेः ।
स्तोत्रैरजस्रं कथमन्यथार्थिनो धनार्थमस्यैव यशांसि तुष्टुवुः ॥ ५२ ॥

रत्नावनीबिम्बितचारुमूर्तयो विरेजिरे तस्य चमूचराः प्रभोः ।
विज्ञाय सेवावसरं रसातलाद्विनिःसरन्तो भवनामरा इव ॥ ५३ ॥

लावण्यकासारतरङ्गसीकरव्रजैरिवोद्वृत्तभुजाग्रपातिभिः ।
लाजैस्तमानर्चुरुदग्रमन्मथद्रुमप्रसूनैरिव पौरयोषितः ॥ ५४ ॥

---

१. खड्गः; (पक्षे) कराश्च वालाश्च(?). २. शोभनवर्णा ब्राह्मणादयः; कनकं च. ३. सेना; भूषणविशेषश्च. ४. न अरीणामिति च्छेदः; (पक्षे) नारीणाम्. ५. सुधां-अलंकामयमानः; (पक्षे) सुधाम-लङ्कां-अयमानः. ६. दक्षिणां दिशम्. ७. अश्वसेनया; वानरसेनया च. ८. दूरीकृतदोषः; नाशितदूषणाख्यराक्षसश्च.

जीवेति नन्देति जयेति चोच्चकैरुदीरिताशीर्जरतीभिरात्मनः ।
सिद्धेरिव द्वारमवाप तत्क्षणं पुरस्तदानीं युवराजकुञ्जरः ॥ ९५ ॥
अग्रे प्रसर्पच्चतुरङ्गविस्तृतां कृशां च मध्ये विशिखावरोधतः ।
पश्चादतुच्छामपि तां पताकिनीं प्रियामिव प्रेक्ष्य स पिप्रिये प्रभुः ९६
हर्म्यैरिवोत्तम्भितकुम्भशोभितैरुपात्तनानावलभीमतैर्गजैः ।
निर्यान्तमुत्केव वियोगविक्लवा तमन्वगात्सालसमुन्नतैः पुरी ॥ ९७ ॥
रम्याननेन्दोर्धृतकाननश्रियः श्रितस्य सद्भिः सदनाश्रयस्य च ।
वेगेन भर्तुः पथि गच्छतोऽन्तरं महत्तदा तस्य पुरस्य चाभवत् ॥९८॥
श्रेणीव रेणूद्गमनिष्ठितावनिस्फुटीभवच्छेषफणामणित्विषाम् ।
सर्पत्सु सैन्येषु रराज दन्तिनां मदस्रुतिस्तत्क्षणपातलोहिनी ॥ ९९ ॥
कम्पाद्भुवः क्षुभ्यदशेषवारिधिस्तदा भविष्यज्जगतोऽप्युपप्लवः ।
अस्या व्यधास्यन्भरभङ्गुराकृतेर्गजा न चेद्दानजलाभिषेचनम् ॥ ६० ॥
प्रायोऽपदस्पृष्टमहीतलाः खुरैर्वियद्गमाभ्यासरसं हया व्यधुः ।
तन्मत्तमातङ्गचमूभराद्भुवो विभावयामासुरमी विपर्ययम् ॥ ६१ ॥
लीलाप्रचारेषु यथा यथा व्यधुर्नखाग्रभागोल्लिखनं तुरंगमाः ।
उत्सार्पिपांसुप्रकरच्छलादभूत्तथा तथोर्व्याः पुलकाङ्कुरोद्गमः ॥ ६२ ॥
अन्तःस्खलंल्लोहखलीननिर्गलद्विलोललाला जलफेनिलाननाः ।
चेलुः पिबन्तः पवनातिरंहसो द्विषद्यशांसीव तुरंगपुंगवाः ॥ ६३ ॥
तस्योत्क्रमालक्ष्यत पार्श्वयोर्द्वयोः समुल्लसल्लोलपृथुप्रकीर्णका ।
ध्यानान्नभोवर्त्मगतेरसंशयादुदीर्णपक्षेव तुरंगमावलिः ॥ ६४ ॥
तस्य व्रजद्वीरतुरंगसंनिधौ मयूरपत्रातपवारणव्रजः ।
वीचीचयोल्लासितशैवलावलीविलासमासादयति स्म तोयधेः ॥ ६५ ॥

---

१. रथ्या. २. सेनाम्. ३. उपात्ता नाना बलस्य बलेन वा भीमता भयंकरत्वं यैः; (पक्षे) वलभी चन्द्रशाला तया मतैः. ४. सालवत्समुन्नतैः; (पक्षे) सालसमिति क्रियाविशेषणम्. ५. वनम्; (पक्षे) कुत्सितं मुखम्. ६. सतामनाश्रयस्य; (पक्षे) सदनानां गृहाणामाश्रयस्य.

रैरोऽरीरोरुररुरत्काकुकं[1] केकिकङ्किकः ।
चञ्चच्चञ्चूचचिच्चोचे तततातीति तं ततः ॥ ३२ ॥ (चतुरक्षरः)

अन्तरत्यन्तनिर्गूढपदाभिप्रायभीषणा ।
वाग्भुजङ्गीव ते मृद्वी कस्य विश्वासकृद्द्विहिः ॥ ३४ ॥

दुर्जनः सत्सभां प्रष्टामीहते न स्वभावतः ।
किमुलूकस्तमोहन्त्रीं भास्वतः सहते प्रभाम् ॥ ३५ ॥

(गूढचतुर्थपादः)

सीमां सौभाग्यभाग्यानां शोभासंभावितस्मरः ।
अहो धाष्टर्चं जगन्नाथः कार्मणीत्युच्यते खलैः ॥ ३६ ॥

प्रभाप्रभावभाग्येन भाग्येन स वधूकरम् ।
तेने तेनेऽपतन्माला तन्मालापं वृथा कृथाः ॥ ३७ ॥

गुणदोषानविज्ञाय भर्तुर्भक्ताधिका जनाः ।
स्तुतिमुच्चावचामुच्चैः कां न कां रचयन्त्यमी ॥ ३८ ॥

धर्मे बुद्धिं परित्यक्त्वोपरत्रानेकपापदे[2] ।
सदयः कुरुते कस्तां परत्रानेकपापदे[3] ॥ ३९ ॥

आस्तां जगन्मणेस्तावद्भानोरन्यैर्महस्विभिः ।
अनूरोरपि किं तेजः संभूय परिभूयते ॥ ४० ॥

मम चापलतां वीक्ष्य नवचापलतां दधत् ।
अयमाजिरसाद्गन्तुं किं यमाजिरमिच्छति ॥ ४१ ॥

सौजन्यसेतुमुद्भिन्दन्यत्त्वया नैव वारितः ।
तन्नः क्रोधार्णवौघेन प्लावनीयो नृपव्रजः ॥ ४२ ॥

---

१. रायं धनं ददातीति रैरः; अरीन् ईरयन्तीत्यरीराः सुभटाः, तेषां ऊरुर्महान्. केकिना कङ्कते इत्येवंशीलः केकिकङ्की कार्तिकेयः, तस्येव कः कामो यस्य स केकिकङ्किकः. चञ्चन्ती चञ्चुर्दक्षा उच्चा महती चिद्बुद्धिर्यस्य. ततां प्रचुरां तां लक्ष्मीमतति गच्छति इत्येवंशीलस्तततातीती. काकुलं मर्मव्यथकशब्दम्. २. अधर्मे. ३. परेभ्यस्त्रायन्ते ते अनेकपा हस्तिनस्तेषामापदे.

विपद्विधास्यतेऽत्राहंकारिभिः [1]कारिभिर्मम।
एकाकिनापि रुध्यन्ते हरिणा हरिणा न किम् ॥ ४३ ॥
जयश्रियमथोद्वोढुं त्वत्प्रतापाग्निसाक्षिकाम्।
वित्तमाजौ ददद्दूतं सुषेणो विससर्ज सः ॥ ४४ ॥
रागिताजिवरा कापि नेतेनाततताससा।
सामतातताना तेने पिकारावजिता गिरा ॥ ४५ ॥
(अनुलोमप्रतिलोमार्धः)

तथाप्यनुनयैरेष शाम्यति स्म न दुर्जनः।
औौर्वस्तनूनपान्नीरैर्नीरधेरिव भूरिभिः ॥ ४६ ॥
युद्धानकाः स तद्धीमाः सदानघ नदन्ति नः।
बबृंहिरे जयायोच्चैः सदानघनदन्तिनः ॥ ४७ ॥
उद्भिन्नोद्दामरोमाञ्चकञ्चुकेषु मुदस्तदा।
अन्तरङ्गेषु शूराणां संनाहा न बहिर्ममुः ॥ ४८ ॥
नि[2]जदोरदनोदीर्णश्रीरता [3]घनताविभा।
[4]तरसारबलं चेरुरिभा [5]भूतहृतो भृशम् ॥ ४९ ॥
(प्रातिलोम्येनानन्तरश्लोकः)
संभृतो [6]हृतभूभारिरुचेऽलं [7]वरसारतः।
[8]भावितानघतारश्रीर्न दीनो दरदोऽजनि ॥ ५० ॥
शङ्केऽनुकूलपवनप्रेङ्खितैः स्यन्दनध्वजैः।
निक्कणत्किङ्किणीक्काणैर्योद्धुं जहुषिरे द्विषः ॥ ५१ ॥
नवप्रियेषु बिभ्राणाः सङ्गरागमनायकाः।
क योषितोऽभवन्नोत्काः संगरागमनाय काः ॥ ५२ ॥

---

१. का-अरिभिः. २. निजबाहुदन्ताभ्यामुदीर्णा या श्रीस्तस्यां रताः. ३. घनानां समूहो घनता तद्वद्विभा येषाम्. ४. तरसा आरवलं शत्रुसैन्यम्. ५. भूतहृतः प्राणिघातकाः. ६. भुवि भान्तीति भूभास्ते च तेऽरयश्च, तेषां रुचिः सा हृता येन, तत्संबोधनम्. ७. वरसारत उत्कृष्टबलात्. ८. भाविता अधिगता अनघा तारा उज्ज्वला श्रीर्येन.

सद्दशावत्यनीकेऽत्र त्वत्प्रतापप्रदीपके ।
वधायैव निपेतुस्ते पतंगा इव शत्रवः ॥ ९३ ॥

[1]गङ्गोरगगुरूग्राङ्गगौरगोगुरुरुग्रगुः ।
रागागारिगरैरङ्गैरग्रेऽङ्गं गुरुगीरगात् ॥ ९४ ॥ (द्व्यक्षरः)

अङ्गमुत्तुङ्गमातङ्गमायान्तं प्रत्यपद्यत ।
वात्येव वारिदानीकं सा सुषेणस्य वाहिनी ॥ ९५ ॥

[2]अतस्तमानसे सेना [2]सदाना सारवा रणे ।
अतस्तमानसेसेना सदानासारवारणे ॥ ९६ ॥ (समुद्गकः)

कुम्भभूरिव निर्मग्नसपक्षानेकभूधरम् ।
उच्चुलुम्पांचकारोच्चैः स क्षणादङ्गवारिधिम् ॥ ९७ ॥

निस्त्रिंशदारितारातिहृदयाचलनिर्गता ।
न करिस्कन्धदघ्नासृङ्नदी दीनैरतीर्यत ॥ ९८ ॥ (निरौष्ठ्यः)

स्नेहपूर इव क्षणे तत्रोद्रेकं महीभुजः ।
अस्तं यियासवोऽन्येऽपि प्रदीपा इव भेजिरे ॥ ९९ ॥

हेमवर्माणि सोऽद्राक्षीद्भाविना भाविनासिना ।
द्विड्बलान्यत्सकेनेव निचितानि चिताग्निना ॥ ६० ॥

[3]तैर्घनोत्क्षिप्तदुर्वारतै[4]रवारिमहोर्मयः ।
अरिक्ष्माधरवाहिन्यो रणक्षोणीं प्रपेदिरे ॥ ६१ ॥

समुत्साहं समुत्साहंकारमाकारमादधत् ।
ससारारं ससारारम्भवतो भवतो बलम् ॥ ६२ ॥

कोदण्डदण्डनिर्मुक्तकाण्डच्छन्ने विहायसि ।
चण्डांशुश्चण्डभीत्येव संवव्रे करसंचयम् ॥ ६३ ॥

---

१. गङ्गा च उरगगुरुश्च उग्राङ्गं च तद्वद्गौरा या गौर्वाणी तया गुरुर्बृहस्पतिः. उग्रा गावो बाणा मयूखा वा यस्य सः. राग एवागारं येषां तेषां गरैर्विषप्रायैः. गुरुगीर्महानादः. २. सत् शोभनं अनोत बलं यस्याः सा सदानाः, अतस्तमानान् अक्षीणाहंकारान् स्यति तस्मिन्. सेना स्वामियुक्ता. सदानासारा वारणा यस्मिन्. ३. त एव घनाः. ४. वारि जलम्; (पक्षे) तरवारिः खड्गः.

सारसेना[1]रसे नागाः समरे समरेखया ।
न न दाननदाश्वैरुर्वाजिनो वाजिनोद्धताः ॥ ६४ ॥
उद्दण्डं यत्र यत्रासीत्[2]पुण्डरीकं रणाम्बुधौ ।
निपेतुस्तव योधानां तत्र तत्र शि[3]लीमुखाः ॥ ६५ ॥
के न बाणै[4]र्नवाणैस्ते सेनया सेनया हताः ।
मानवा मानबाधान्धाः सत्वराः सत्त्वराशयः ॥ ६६ ॥
बाणैर्बलमरातीनां सदापिहि[5]तसौरभैः ।
अपूरि सुरमुक्तैश्च त्वद्बलं कुसुमोत्करैः ॥ ६७ ॥
मूर्धानं दुधुवुस्तत्र कङ्कपत्रक्षता भटाः ।
प्रभोरर्थासमाप्तौ वा प्राणानां रोद्धुमुक्रमम् ॥६८॥ (अतालव्यः)
त्रुट्यद्विट्कण्ठपीठास्थिटात्कारभरभैरवे ।
पेतुर्भ[6]यान्वितास्तत्र पत्रिणो न पतत्रिणः ॥ ६९ ॥
शरघाताद्गजैर्दीनरसितै[7]रुत्पलायितम् ।
रक्ताब्धौ तत्करैश्छिन्नैरसितै[8]रुत्पलायितम् ॥ ७० ॥
वेतालास्ते तृषोत्तालाः पश्यन्तः शरलाघवम् ।
पाणिपात्रस्थमप्यत्र कीलालं न पपुर्युधि ॥ ७१ ॥
त्वद्बलैर्वि[9]षमारातिमारातिस्फुटविक्रमैः ।
अखगं व्योम कुर्वाणैः [10]कुंर्बाणैस्तस्तरे तदा ॥ ७२ ॥
संसारसारलक्ष्म्येव वैदर्भ्या स्वीकृतस्य ते ।
ईर्ष्यया वर्धितोत्साहा तत्र शत्रुपरम्परा ॥ ७३ ॥
प[11]राजिताशु भवतः सेनया य[12]तमानया ।
पराजिता शुभवतः से[13]नया य[14]तमानया ॥ ७४ ॥ (युग्मम्)

---

१. रसो रागः, शब्दो वा. २. छत्रं, सिताम्भोजं च. ३. बाणाः, भ्रमराश्च. ४. नवशब्दैः. ५. आच्छादितसूर्यकान्तिभिर्बाणैः, प्रकटीकृतसौरभ्यैः कुसुमोत्करैश्च. ६. भया प्रभया; (पक्षे) भयेन. ७. युद्धात्पलायिता गजा इत्यर्थः. ८. उत्पलवदाचरितम्. ९. विषमा ये अरातयस्तेषां मारो मारणम्. १०. कुः पृथ्वी. ११. परैरजिता आशु. १२. यत्नं कुर्वाणया. १३. स्वामिसमेतया. १४. विस्तृताहंकारया.

ततो भग्ने बलेऽन्यस्मिन्पुलकस्फारसैनिकः ।
एकहेलं सहोत्तस्थे मालवेन्द्रेण कुन्तलः ॥ ७५ ॥

सुषेणस्तद्बलद्व्यूहं सन्नाहवपुषं[1] ततः ।
हर्षेण वीक्ष्य सौवर्णसंनाहवपुषं ततः ॥ ७६ ॥

चतुरङ्गबले तत्र परिसर्पति शात्रवे ।
सैन्यमाश्वासयामास व्याकुलं स्वं चमूपतिः ॥ ७७ ॥

स वाजिसिन्धुरग्रामान्संभ्रमादभिधावितः ।
जवादसिं स्फुरद्धामा बिभ्रन्नादमधात्ततः ॥ ७८ ॥ (गोमूत्रिकः)

सगजः सरथः साश्वः सपदातिः समन्ततः ।
क्रामन्नभिमुखं क्रोधात्तीव्रतेजाः शितायुधः ॥ ७९ ॥ (युग्मम्)

समारेभे[2] समारेभे समारे भे रणे रिपुः ।
स दानेन सदानेन सदानेन व्यपोहितुम् ॥ ८० ॥

अम्भोधिरिव कल्पान्ते खड्गकल्लोलभीषणः ।
स्खलितो न स भूपालैस्तत्र वेलाचलैरिव ॥ ८१ ॥

कङ्कः[3] किं कोककेकाकी किं काकः केकिकोऽककम् ।
कौकः कुकैककः कैकः कः केकाकाकुकाङ्ककम् ॥ ८२ ॥
(एकाक्षरः)

अनेकधातुरङ्गाढ्यान्[4]कुञ्जराजिदुरासदान्[5] ।
रिपुशैलानसिर्भिन्दञ्जिष्णोर्वज्रमिवाबभौ ॥ ८३ ॥

जघान करवालीयघातेनारेर्बलं बली ।
न नाप्ता ते निरालम्बा करे तेनावनिर्वरः ॥ ८४ ॥ (अर्धभ्रमः)

---

१. सन्न-आहव-पुषं. २. स-मार-इभे, सम-आरेभे, आरेभः शब्दः. समारेभे समारब्धः. दानेन खण्डनेन सदानेन सद्बलेन. व्यपोहितुमुपक्रान्तुम्. ३. कङ्को बकः. कोककेकाकी चक्रवाकहंसगामी. काको ध्वाङ्क्षः. केकिकः मयूरवत्क आत्मा स्वरूपं यस्य सः. कुकैककः स्वर्गपृथ्वीजलेष्वद्वितीयः. गुरुत्वात्. कुटिलं जगाम. केकाकाकुको मयूरः स चिह्नं यस्य स केकाकाकुकाङ्कः, तस्यैव कं शरीरं यस्य तम्. ४. अनेकधा-तुरंग; (पक्षे) अनेक-धातु-रङ्ग. ५. कुञ्जर-आजि; (पक्षे) कुञ्ज-राजि.

तेन सङ्ग्रामधीरेण तव नाथ पदातिना ।
एकहेलमनेकेभ्यः शत्रुभ्यो निशितासिना ॥ ८५ ॥
[१]भेरं याममयारम्भरञ्जिता ददताजिरम् ।
याता क्षमा माक्षता या मदमाररमादम ॥ ८६ ॥ (युग्मम्)
(सर्वतोभद्रम्)

धाम्ना धाराजलेनेव दृष्टमातङ्गसंगमाम् ।
अभ्युक्ष्याभ्युक्ष्य जग्राह तत्कृपाणो रिपुश्रियम् ॥ ८७ ॥
देवेन्दो विवदद्वादिवाददावदवाम्बुद ।
दिवं ददद्दुदावेदं [२]दुंद्ववृन्दं विदै[३]वंवत् ॥ ८८ ॥ (द्व्यक्षरः)
पीत्वारिशोणितं सद्यः क्षीरगौरं यशो वमन् ।
इन्द्रजालं तदीयासिः काममाविश्चकार सः ॥ ८९ ॥
स प्रसादेन देवस्य रसादेकपदे बलम् ।
संपदेऽ[४]जयदेव द्विट्कम्पदेन [५]सदेवनम् ॥ ९० ॥ ([६]मुरजबन्धः)
तेन मालवचोलाङ्गकुन्तलव्याकुले रणे ।
भानुनेव तमःकीर्णे किं किं नो तेजसा कृतम् ॥ ९१ ॥
[७]काननाः कानने नुन्ना नाकेऽनी[८]र्काङ्ककानिनः ।
के के [९]नानीकिनीनेन [१०]नांकीनैकाकिना ननु ॥ ९२ ॥ (द्व्यक्षरः)
सागरे भुवि कान्तारे संगरे वा गरीयसि ।
त्वद्भक्तिः कस्य नो दत्ते कामधेनुरिवेहितम् ॥ ९३ ॥
देवनाथमनादृत्य भावनास्तम्भनादृते ।
त्वयीनासीत्स नास्तद्विड्जयी नाथमनास्ततः ॥ ९४ ॥ (मुरजबन्धः)
खड्गत्रासावशिष्टेऽथ प्रणष्टे विद्विषां बले ।
सुषेणः शोधयामास रणभूमिं महाबलः ॥ ९५ ॥

---

१. अरमत्यर्थम्. अयारम्भरञ्जिता शुभावहविधिप्रारम्भरञ्जिता सती. मा लक्ष्मीस्तस्या अक्षता नित्यता. आररमादम अरिसमूहलक्ष्मीदमन. याता लब्धा. २. शत्रुसमूहम्. ३. विपरीतभाग्ययुक्तम्. ४. जितवानेव. ५. सक्रीडनं यथा भवति. ६. अस्फुटोऽस्य बन्धस्य विन्यासः. ७. कुत्सितमुखाः. ८. अनीकाङ्के सङ्ग्रामोत्सङ्गे कनन्ति एवंशीलाः. ९. सेनापतिना. १०. हे देवेश, एकाकिना.

गजवाजिजवाजिजयानुगतः स रसात्तरसात्तयशोविभवः ।
क्रमवन्तमवन्तमिलां श्रयितुं स्वयमेत्यॅयमेत्य भवन्तमितः ॥ ९६ ॥

चन्द्रांशुचन्दनरसादपि शीतमङ्गं
पीयूषपूरमसकृद्वमतीव दृष्टिः ।
क्वायं पुनर्वसति वैरिमहीशवंश-
संप्लोषणो भुवनभूषण ते प्रतापः ॥ ९७ ॥

चक्रेऽरिसंततिमिहाजिषु नष्टपद्मा-
तिख्यातिमेकचकिताकृतिधारिणीं यः ।
तिग्मासिरिष्टमतवत्स तवावति क्ष्मां
किं तत्परं धरणिमित्र कृतिन्ब्रवीमि ॥ ९८ ॥

कः शर्मदं वृजिनभीतिहरं जितात्मा
हर्षाय न स्मरति तेऽभिनवं चरित्रम् ।
संपद्गुणातिशयपस्त्य रुचं तवैति
कः कान्तिमानतिसुधाद्रवरोचमानाम् ॥ ९९ ॥

(इति श्लोकद्वयनिर्वर्तितषोडशदलकमलचित्रे कविकाव्यनामाङ्कः । यथा—कर्णिकाक्षरेण सह प्रथमदलाग्रदलाग्रेषु 'हरिचंद्रकृतधर्मजिनपतिचरितमिति' इति ।)

हतमोहतमोगतेस्तव क्षणदेनेक्षणदेशशोभितः ।
समया समयात्स्वयं ततः कमला त्वां कमलाभमैक्षत ॥ १०० ॥

आतङ्कार्तिहरस्तपद्युमणिसद्भूरिप्रभाजिद्वसु-
र्द्रष्टव्यं हृदि चिह्नरत्नमसमं शौचं च पीनोन्नते ।
देहेऽधत्त हितं त्वमन्दमहृदि क्षुद्रेऽप्यतो दर्शने
वल्गुर्मद्रमहस्य रम्यमपरं क्षीणव्यपायं पदम् ॥ १०१ ॥

दम्भलोभभ्रमा आदिरुद्धा गुणैर्द्रष्टुमप्यक्षमादेव वक्रं तव ।
वर्जयित्वा ययुः सुश्रुत त्वां तथा ते भजन्ते यथा नेश भक्तानपि ॥१०२॥

---

१. भाग्यं प्राप्य. २. उत्सवदेन. ३. समीपे. ४. कौस्तुभमणिम्. ५. मनोज्ञोत्सवस्य.

(अत्र श्लोकद्वयविनिर्मिते चक्रचित्रे प्रथमतृतीयषष्ठाष्टमाक्षररेखाभ्रमेण कविनामाङ्कश्लोकः । यथा—

'आर्द्रदेवसुतेनेदं काव्यं धर्मजिनोदयम् ।
रचितं हरिचन्द्रेण परमं रसमन्दिरम् ॥')

स्फुटमिति कथयित्वा सत्कृतिं प्राप्य दूते
गतवति निजगेहं तत्सुषेणः ससैन्यः ।
अहितविजयलब्धं वित्तमानीय भक्त्या-
नतिचिरमुपनिन्ये धर्मनाथाय तस्मै ॥ १०३ ॥

लभ्या श्रीर्विनिहत्य संगरभुवि क्षुद्रद्विषोऽभ्युन्नता
धिक्तां धर्मपरिच्युतामरमिति स्वीकारमन्दस्पृहः ।
तद्धर्माभरुचं[1] दधद्वरमरिद्रव्यं सदायो ददे
देवोऽस्तालसमाधिभित्कृतधियां ताम्यन्महस्वी मुदे ॥ १०४ ॥

(अत्र चक्रबन्धचित्रे तृतीयषष्ठाक्षररेखाभ्रमेण काव्यकविनामाङ्कः । यथा—श्रीधर्माभ्युदयः । हरिचन्द्रकाव्यम् ।)

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्य एकोनविंशः सर्गः ।

---

विंशः सर्गः ।

इत्यब्दानां पञ्चलक्षाणि यावत्क्षीणक्षुद्रारातिरुद्यत्प्रभावः ।
देवः पारावारवेलावनान्तं प्राज्यं धर्मः पालयामास राज्यम् ॥ १ ॥
रात्रौ तुङ्गे स्फाटिके सौधशृङ्गे तामास्थानीमेकदा स प्रतेने ।
चन्द्रज्योत्स्नान्तर्हितेऽस्मिन्प्रभावादाकाशस्था या सुधर्मेव रेजे ॥ २ ॥
जीर्णं कालाज्जातरन्ध्रं नु पश्यन्देवस्तारादन्तुरं व्योमभागम् ।
ज्वालालीलां बिभ्रतीं कल्पवह्नेरहायोल्कां निष्पतन्तीं ददर्श ॥ ३ ॥
आविष्कर्तुं स्फारमोहान्धकारच्छन्नं मुक्तेर्मार्गमत्यन्तदुर्गम् ।
आदौ दिष्ट्या व्यञ्जिता या ज्वलन्ती वर्तिर्दीपस्येव शोभामभार्षीत् ॥ ४ ॥

---

१. स्वर्णाभदीप्तिम्.

व्यादायास्यं विस्फुरत्तारतारादन्तश्रेणीभीष्ममत्तुं जगन्ति ।
कालेनैका व्योम्नि विस्तार्यमाणा जिह्वाशु श्रद्धया या चकासे ॥ ५ ॥
कान्तिः कालव्यालचूडामणेः किं पिङ्गा स्थाणोर्व्योममूर्तेर्जटा वा ।
ज्वाला किं वास्यैव भालाक्षवह्नेर्दाहायेन्दोर्धाविता कामबन्धोः ॥ ६ ॥
भूयोऽनेन त्रैपुरं किं नु दाहं कर्तुं मुक्तस्तप्तनाराच एषः ।
इत्याशङ्काव्याकुलं लोकचेतो या सर्पन्ती व्योम्नि दूरादकार्षीत् ॥ ७ ॥
कर्तुं कार्यं केवलं स्वस्य नासौ देवो विश्वस्यापि धाता तपस्याः(?) ।
इत्यानन्दात्तस्य नीराजनेव व्योम्ना रेजे या समारभ्यमाणा ॥ ८ ॥
तामालोक्याकाशदेशादुदञ्चज्ज्योतिर्ज्वालादीपिताशां पतन्तीम् ।
इत्थं चित्ते प्राप्तनिर्वेदखेदो मीलच्चक्षुश्चिन्तयामास देवः ॥ ९ ॥
देवः कश्चिज्ज्योतिषां मध्यवर्ती दुर्गे तिष्ठन्नित्यमेषोऽन्तरिक्षे ।
यातो दैवादीदृशीं चेदवस्थां कः स्याल्लोके निर्व्यपायस्तदन्यः ॥ १० ॥
आयुःकर्मालानभङ्गे प्रसर्पन्नापद्वीथीदीर्घदोर्दण्डचण्डः ।
प्राणायामारामूलनि भिन्दन्कैरुत्सिक्तः सह्यते कालदन्ती ॥ ११ ॥
यत्संसक्तं प्राणिनां क्षीरनीरन्यायेनोच्चैरङ्गमप्यन्तरङ्गम् ।
आयुश्छेदैर्याति चेत्तत्तदास्था का बाह्येषु स्त्रीतनूजादिकेषु ॥ १२ ॥
प्रत्यावृत्तिर्न व्यतीतस्य नूनं सौख्यस्यास्ति भ्रान्तिरागामिनोऽपि ।
तत्तत्कालोपस्थितस्यैव हेतोर्बध्नात्यास्थां संसृतौ को विदग्धः ॥ १३ ॥
वातान्दोलत्पद्मिनीपल्लवाम्भो बिन्दुच्छायाभङ्गुरं जीवितव्यम् ।
तत्संसारासारसौख्याय कस्माज्जन्तुस्ताम्यत्यब्धिवीचीचलाय ॥ १४ ॥
सारङ्गाक्षीचञ्चलापाङ्गनेत्रश्रेणीलीलालोकसंक्रामितं नु ।
व्यालोलत्वं तत्क्षणाद्दृष्टनष्टा धत्ते नृणां हन्त तारुण्यलक्ष्मीः ॥ १५ ॥
हालाहेलासोदरा मन्दरागप्रादुर्भूता सत्यमेवात्र लक्ष्मीः ।
नो चेच्चेतोमोहहेतुः कथं सा लोके रागं मन्दमेवादधाति ॥ १६ ॥
विण्मूत्रादेर्धाम मध्यं वधूनां तन्निःष्यन्दद्वारमेवेन्द्रियाणि ।
श्रोणीबिम्बं स्थूलमांसास्थिकूटं कामान्धानां प्रीतये धिक्तथापि ॥ १७ ॥

---

१. वह्निरिव घासकूटम्.

मेदोमज्जाशोणितैः पिच्छलेऽन्तस्त्वक्प्रच्छन्ने स्नायुनद्धास्थिसंधौ ।
साधुर्देहे कर्मचण्डालगेहे बध्नात्युद्यत्पूतिगन्धे रतिं कः ॥ १८ ॥
इन्द्रोपेन्द्रब्रह्मरुद्राहमिन्द्रा देवाः केचिद्ये नराः पन्नगा वा ।
तेऽप्यन्येऽपि प्राणिनां क्रूरकालव्यालाक्रान्तं रक्षितुं न क्षमन्ते ॥ १९ ॥
बालं वर्षीयांसमाढ्यं दरिद्रं धीरं भीरुं सज्जनं दुर्जनं च ।
अश्नात्येकः कृष्णवर्त्मेव कक्षं सर्वग्रासी निर्विवेकः कृतान्तः ॥ २० ॥
स्वच्छामेवाच्छाद्य दृष्टिं रजोभिः श्रेयोरत्नं जाग्रतामप्यशेषैः ।
दोषैर्येषां दस्युरूपैरुपात्तं संसारेऽस्मिन्हा हतास्ते हताशाः ॥ २१ ॥
वित्तं गेहादङ्गमुच्चैश्चिताग्नेर्व्यावर्तन्ते बान्धवाश्च श्मशानात् ।
एकं नानाजन्मवल्लीनिदानं कर्म द्वेधा याति जीवेन सार्धम् ॥ २२ ॥
छेत्तुं मूलात्कर्मपाशानशेषान्सद्यस्तीक्ष्णैस्तद्यतिष्ये तपोभिः ।
को वा कारागाररुद्धं प्रबुद्धः शुद्धात्मानं वीक्ष्य कुर्यादुपेक्षाम् ॥ २३ ॥
इत्थं यावत्प्राप्य वैराग्यभावं देवश्चित्ते चिन्तयामास धर्मः ।
ऊचुः स्वर्गादित्युपेत्यानुकूलं देवास्तावत्केऽपि लौकान्तिकास्ते ॥ २४ ॥
निःशेषापन्मूलभेदि त्वयेदं देवेदानीं चिन्तितं साधु साधु ।
एतेनैकः केवलं नायमात्मा संसाराब्धेरुद्धृता जन्तवोऽपि ॥ २५ ॥
नष्टा दृष्टिर्नष्टमिष्टं चरित्रं नष्टं ज्ञानं साधुधर्मादि नष्टम् ।
सन्तः पश्यन्त्वत्र मिथ्यान्धकारे त्वत्तः सर्वं केवलज्ञानदीपात् ॥ २६ ॥
तैरानन्दादित्थमानन्द्यमानं स्वर्दन्तीन्द्रारूढजम्भारिमुख्याः ।
आसेदुस्तं दुन्दुभिध्वानवन्तस्ते चत्वारो[1] निर्जराणां निकायाः ॥ २७ ॥
दत्त्वा प्राज्यं नन्दनायाथ राज्यं देवोऽतुच्छप्रीतिरापृच्छ्य बन्धून् ।
दत्तस्कन्धं याप्ययानं[2] सुरेन्द्रैरारुह्यागात्सालपूर्वं वनं सः ॥ २८ ॥
सिद्धान्नत्वा तत्र षष्ठोपवासी मौलौ मूलानीव कर्मद्रुमाणाम् ।
मुष्टिग्राहैः पञ्चभिः कुन्तलानां वृन्दान्युच्चैरुच्चखान क्षणेन ॥ २९ ॥
केशांस्तस्याधत्त माणिक्यपात्रे क्षीराम्भोधिप्रापणायामरेन्द्रः ।
भर्त्रा मूर्ध्नादाय मुक्तान्कथंचित्को वा विद्वान्नाददीतादरेण ॥ ३० ॥

१. भवनवासि-व्यन्तर-ज्योतिष्क-कल्पवासिनो जैनागमप्रसिद्धाः. २. शिबिकाम्.

प्रालेयांशौ पुष्यमैत्रीं प्रयाते माघे शुक्ला या त्रयोदश्यनिन्द्या ।
धर्मस्तस्यामात्तदीक्षोऽपराह्ने जातः क्षोणीभृत्सहस्रेण सार्धम् ॥ ३१ ॥
तत्र त्यक्तालंकृतिर्मुक्तवासा रूपं बिभ्रज्जातमात्रानुरूपम् ।
देवो भेजे प्रावृषेण्याम्बुवाहश्रेणीमुक्तस्वर्णशैलोपमानम् ॥ ३२ ॥
गीतं वाद्यं नृत्यमप्यात्मशक्त्या कृत्वा चेतोहारि जम्भारिमुख्याः ।
देवाः सर्वे प्राप्तपुण्यातिरेका नत्वार्हन्तं स्वानि धामानि जग्मुः ॥ ३३ ॥
स्कन्धावारे पाटलीपुत्रनाम्नि क्षोणीभर्तुर्धन्यसेनस्य गेहे ।
क्षीरान्नेनाचारवित्पाणिपात्रे कृत्वा पञ्चाश्चर्यकृत्पारणं सः ॥ ३४ ॥
पुण्यारण्ये प्रांशुके क्वापि देशे नासाप्रान्तन्यस्तनिःस्पन्दनेत्रः ।
कार्योत्सर्गं बिभ्रदभ्रान्तचित्तो लोके लेप्याकारशङ्कामकार्षीत्[1]॥३५॥(युग्मम्)
अध्यासीनो ध्यानमुद्रामतन्द्रः स्वामी रेजे लम्बमानोरुबाहुः ।
ये निर्मग्नाः श्वभ्रगर्भान्धकूपे व्यामोहान्धास्तानिवोद्धर्तुकामः ॥ ३६ ॥
मुक्ताहारः[2] सर्वदोपत्यकान्तारब्धप्रीतिः[3] स्वीकृतानन्तवासाः[4] ।
देवो धुन्वन्विग्रहस्थानरातीन्[5]कान्तारेऽपि प्राप सौराज्यलीलाम् ॥ ३७ ॥
देवोऽक्षामक्षान्तिपाथोदपाथोधारासारैः सारसंपत्फलाय ।
सिञ्चन्नुच्चैः संयमारामचक्रं चक्रे क्रोधोद्दामदावाग्निशान्तिम् ॥ ३८ ॥
भिन्दन्मानं मार्दवेनार्जवेन च्छिन्दन्मायां निःस्पृहत्वात्तलोभः ।
मूलादेवोच्छेत्तुकामः स चक्रे कर्मारीणामाश्रवद्वाररोधम् ॥ ३९ ॥
कुर्वन्गुर्वीं वाङ्मनःकायगुप्तिं रक्षन्साक्षात्स्वं समित्यर्गभाभिः (?) ।
बध्नन्नक्षाण्येष दीर्घैर्गुणौघैश्चित्र मोक्षायैव बद्धोद्यमोऽभूत् ॥ ४० ॥
तस्यारण्ये ध्याननिष्कम्पमूर्तेर्वक्त्रस्येवामोदमाघ्रातुकामाः ।
बद्धावासाश्चन्दनस्येव तस्थुः स्वस्थाः स्वैरं स्कन्धबन्धे भुजंगाः ॥ ४१ ॥

---

१. चित्रलिखित इव तस्थौ. २. त्यक्तभोजनः; (पक्षे) मुक्ताहारोऽस्यास्तीति. मौक्तिकहारवानिति यावत्. ३. सर्वदः, अपत्येषु कान्तासु च आरब्धप्रीतिः; (पक्षे) सर्वदा उपत्यकायाः पर्वतासन्नभूमेरन्ते आरब्धप्रीतिः. ४. स्वीकृतानि अनन्तानि वासांसि येन सः, (पक्षे) स्वीकृतमनन्तं वियदेव वासो येन सः. दिगम्बर इति यावत्. ५ युद्धस्थान् शत्रून्; (पक्षे) देहस्थान् कामक्रोधादीन्.

दृष्ट्वात्मानं पुद्गलाद्भिन्नरूपं देवो देहे[1] न स्वबुद्धिं बबन्ध ।
तेनात्याक्षीत्तोयशीतातपार्तं श्रेयोनिष्ठः काष्ठवद्दूरमेनम् ॥ ४२ ॥
विघ्नं निघ्नन्नाक्षिपन्नेष दोषाञ्ज्ञे स्वामी भाजनं यत्क्षमायाः ।
सैषा काचिच्चातुरी तस्य भर्तुश्चित्तेऽस्माकं चित्रमद्यापि दत्ते ॥ ४३ ॥
आसंसारं साहचर्यव्रतस्थं दुःस्थीकुर्वन्रागमागन्तुकेऽपि ।
योगे मैत्रीं पक्षपातं च मोक्षे बिभ्रच्चित्रं स्वं चरित्रं स ऊचे ॥ ४४ ॥
तस्याशेषं कर्षतो धीवरस्य[2] स्फारीभूतं मानसान्मोहजालम्[3] ।
तत्पाशान्तःपीड्यमानैकमीनो मन्ये त्रासान्निर्ययौ मीनकेतुः ॥ ४५ ॥
कल्पान्तोद्यद्द्वादशद्वादशात्मश्रेणीतेजःपुञ्जतीव्रव्रतेऽस्मिन्[4] ।
दृग्व्याघातत्रस्तचित्तेव चक्षुर्नो चिक्षेप प्रत्यहं मोहलक्ष्मीः ॥ ४६ ॥
चक्रे कार्श्यं संयमस्तस्य देहे तन्वानोऽपि ज्योतिरत्यन्तरम्यम् ।
माणिक्यस्येवावनीमण्डनार्थं शाणोल्लेखः सम्यगारभ्यमाणः ॥ ४७ ॥
एकं पात्रं सौकुमार्यस्य तीव्रे तेजःपुञ्जे तापसे वर्तमानः ।
चण्डज्योतिर्मण्डलातिथ्यभाजो भेजे लक्ष्मीं क्षीणपीयूषरश्मेः ॥ ४८ ॥
भर्गादीनां भग्नगर्वातिरेकः कः श्रीधर्मे मीनकेतुर्वराकः ।
अध्यारूढप्रौढिरग्नौ न कुर्याद्दृप्तज्योतिःस्तम्भमम्भोनिषेकः ॥ ४९ ॥
भ्रूचापेनाकर्णमाकृष्य मुक्ता स्वर्गस्त्रीभिस्तत्र दीर्घाः कटाक्षाः ।
हृत्संतोषाविर्भवद्वारबाणे[5] बाणाः कामस्येव वैफल्यमीयुः ॥ ५० ॥
भोगे रोगे काञ्चने वा तृणे वा मित्रे शत्रौ पत्तने वा वने वा ।
देवो दृष्टिं निर्विशेषां दधानोऽप्येकः सीमासीद्विशेषज्ञतायाः ॥ ५१ ॥
तथ्यं पथ्यं चेदभाषिष्ट किंचित्सिद्धं शुद्धं चेदभुङ्क्तान्यदत्तम् ।
मुक्त्वा नक्तं चेदयासीत्स पश्यन्सर्वं किंचित्तस्य शास्त्रानुरोधि ॥ ५२ ॥
तस्यावश्यं वायुरेकेन्द्रियोऽपि प्रत्यासत्तौ प्राप न प्रातिकूल्यम् ।
तत्किं चित्रं तत्र पञ्चेन्द्रियाणां सिंहादीनां यन्न दुःशीलभावः ॥ ५३ ॥

---

१. देहात्. २. धिया श्रेष्ठस्य; (पक्षे) कैवर्तस्य. ३. अन्तःकरणात्; (पक्षे) सरोविशेषात्. ४. द्वादशात्मा दिवाकरः. ५. वारबाणः कञ्चुकः.

अन्तर्बाह्यैर्दीप्यमानैस्तपोग्निज्वालैर्नीत्वा दुर्जराण्याशु पाकम् ।
भुञ्जानोऽसौ कर्मवल्लीफलानि श्लाघ्यः स्वल्पैरप्यहोभिर्बभूव ॥ ९४ ॥
निर्व्यामोहो निर्मदो निष्प्रपञ्चो निःसङ्गोऽयं निर्भयो निर्ममश्च ।
देशे देशे पर्यटन्संयतानां केषां नासीन्मोक्षशिक्षैकहेतुः ॥ ९५ ॥
छद्मस्थोऽसौ वर्षमेकं विहृत्य प्राप्तो दीक्षाकाननं शालरम्यम् ।
देवो मूले सप्तपर्णद्रुमस्य ध्यानं शुक्लं सम्यगालम्ब्य तस्थौ ॥ ९६ ॥
माघे मासे पूर्णमास्यां सपुष्पे कृत्वा धर्मो घातिकर्मव्यपायम् ।
उत्पादान्तध्रौव्यवस्तुस्वभावोद्भासि ज्ञानं केवलं स प्रपेदे ॥ ९७ ॥
भित्त्वा कर्मध्वान्तमभ्युद्गतेऽस्मिन्दत्तानन्दे केवलज्ञानचन्द्रे ।
तत्कालोद्यद्दुन्दुभिध्वानदम्भाद्व्योमाम्भोधिर्गाढमभ्युज्जगर्ज ॥ ९८ ॥
जातं चेतो व्योमवन्नीरजस्कं नृणां पूर्वाद्या इवाशाः प्रसेदुः ।
प्राप द्वेषीवानिलोऽप्यानुकूल्यं किं किं नासीन्निष्कलङ्कं तदानीम् ॥ ९९ ॥
तन्माहात्म्योत्कर्षवृत्त्येव हर्षं बिभ्राणासौ साधुगन्धोदवृष्ट्या ।
तत्कालोद्यत्सस्यसंपच्छलेन क्षोणी तत्राधत्त रोमाञ्चमुच्चैः ॥ ६० ॥
नित्योपात्तानङ्गसङ्ग्रामलीलासाहाय्येन व्यञ्जितात्मापराधम् ।
भीत्येवास्य क्रूरकंदर्पशत्रोः सेवां चक्रे चक्रमस्मिन्नृतूनाम् ॥ ६१ ॥
भाषाभेदैस्तैश्चतुर्भिश्चतुर्धा संसारस्यापारदुःखां प्रवृत्तिम् ।
वक्तुं चातुर्वर्ण्यसंघस्य हेतोर्मन्ये देवोऽसौ चतुर्वक्त्र आसीत् ॥ ६२ ॥
तस्य क्षीणाशातवेद्योदयत्वान्नाभूद्भुक्तिर्नोपसर्गः कदाचित् ।
निःष्पन्दाया ज्ञानदृष्टेरिवापुः पक्ष्मस्पन्दं स्पर्धया नेक्षणानि ॥ ६३ ॥
वृद्धिं प्रापुर्नाङ्गजा वा नखा वा तस्यावश्यं योगनिद्रास्थितस्य ।
का वार्ता वा कर्मणामान्तराणां येषां रेखा नाममात्रावशेषा ॥ ६४ ॥
पादन्यासे सर्वतो न्यस्यमानप्रेङ्खत्सद्माम्भोजलीलाशयेव ।
सेवानम्रप्राणिसंचारलक्ष्या पादाभ्यर्णं नास्य लक्ष्मीर्मुमोच ॥ ६५ ॥

---

१. 'संस्कृतं प्राकृतं चैवापभ्रंशो भूतभाषितम् । इति भाषाश्चतस्रोऽपि यान्ति काव्यस्य कायताम् ॥' इति वाग्भटः.

नो दौर्भिक्ष्यं नेतयो नोपसर्गा नो दारिद्र्यं नोपघातो न रोगाः।
तन्माहात्म्याद्योजनानां शते द्वे नाभूत्किंचित्क्कापि कर्माप्यनिष्टम् ॥ ६६ ॥
नादैर्घण्टासिंहशङ्खानकानां कल्पज्योतिर्भावनव्यन्तरेन्द्राः।
कर्तुं सेवां ते प्रचेलुर्गुणौघैर्हृत्संलग्नैः कृष्यमाणा इवास्य ॥ ६७ ॥
स्वर्गात्तत्रागच्छतामन्तराले रेजे पङ्क्तिः कापि वैमानिकानाम्।
शुभ्रीकर्तुं कीर्तिसंपत्सुधाभिर्व्योमेवोच्चैर्मञ्चकाध्यासितानाम् ॥ ६८ ॥
तस्मिन्काले तां सभां धर्मनाथस्येन्द्रादेशाद्व्योम्नि चक्रे कुबेरः।
यस्या नानारत्नमय्याः प्रमाणं पञ्च प्राहुर्योजनान्यागमज्ञाः ॥ ६९ ॥
नेदीयस्याः प्रेयसा विप्रलम्भव्याख्यादक्षां तेन वेणीं विमोच्य।
धूलीजालच्छद्मना पार्श्वतोऽस्याः क्षिप्तं मुद्राकङ्कणं मुक्तिलक्ष्म्याः ॥ ७० ॥
ते प्रत्याशं वायुवेल्लद्ध्वजाग्रा मानस्तम्भास्तत्र चत्वार आसन्।
क्रोधादीनां ये चतुर्णां निरासे संसल्लक्ष्म्यास्तर्जनीकार्यमीयुः ॥ ७१ ॥
तत्पर्यन्ते रत्नसोपानरम्या वाप्यो रेजुस्ताश्चतस्रश्चतस्रः।
प्रौढेनार्हत्तेजसा यत्र रात्रौ कोकः शोकं नाप कान्तावियोगात् ॥ ७२ ॥
आस्यं तस्याः [1]सालकान्तं दधत्याः शोभामङ्क्षे संसदः स्वां दिदृक्षोः।
तच्चत्वारि स्फाटिकस्वच्छनीराण्यापुर्लीलादर्पणत्वं सरांसि ॥ ७३ ॥
मन्दान्दोलद्वातलीलाचलोर्मिस्तेभ्योऽप्यग्रे खातिका तोयपूर्णा।
जैनव्याख्याज्ञातसंसारदुःखत्रस्यन्निष्क्रान्ताहिगर्भेव रेजे ॥ ७४ ॥
अन्तर्लीनैकैकनिष्कम्पभृङ्गप्रेङ्खत्पुष्पा पुष्पवाटी तदूर्ध्वम्।
दत्ताश्चर्या भूत्रयस्यापि भर्तुर्द्रष्टुं लक्ष्मीं स्फारिताक्षीव रेजे ॥ ७५ ॥
सालः शृङ्गालम्बिनक्षत्रमालस्तस्याः प्रान्ते नायमासीद्विशालः।
भ्रष्टं किं तु प्रोतरत्नं तदानीमिन्द्रक्षोभात्कुण्डलं स्वर्गलक्ष्म्याः ॥ ७६ ॥
भृङ्गाराद्यैर्मङ्गलद्रव्यवृन्दैः शङ्खध्वानैः सुप्रधानैर्निधानैः।
द्वारे द्वारे निःस्पृहस्यापि भर्तुर्विश्वैश्वर्यं व्यज्यते स्म प्रभूतैः ॥ ७७ ॥
तस्यैवोच्चैर्गोपुराणां चतुर्णामन्तर्द्वे द्वे रेजतुर्नाट्यशाले।
यत्रावर्णं शासनं मीनकेतोरेणाक्षीणां लास्यमासीज्जनेषु ॥ ७८ ॥

---

1. सालेव प्राकारेण कान्तम्; (पक्षे) अलकान्तैः समेतम्.

द्वौ द्वौ मार्गे धूपकुम्भावभूतां यद्वक्रेभ्यो निर्गता धूमराजिः ।
मुक्त्वा देहं ज्ञातुरग्रे भ्रमन्ती भर्तुः कर्मश्यामिकेवावभासे ॥ ७९ ॥
कृत्वा रूपं दंशपोतप्रमाणं भीत्या कोणे क्वापि लोके स्थितस्य ।
पापस्येवोत्सारणार्थं सुगन्धो धूमस्तस्मिन्धूपजन्मोज्जिजृम्भे ॥ ८० ॥
क्रीडोद्यानान्यत्र चत्वारि ताभ्यामासन्नूर्ध्वप्रोल्लसत्पल्लवानि ।
इन्द्रोद्यानं तच्चतुर्यागवृक्षव्याजाज्जेतुं यैरुदस्ताः स्वहस्ताः ॥ ८१ ॥
प्रेङ्खद्दोलासीनसेव्याम्बुधारैर्धारायन्त्रैस्तैर्लतामण्डपैश्च ।
स्वैरक्रीडल्लोकचित्तेक्षणैणास्तेऽप्यारेजुः काञ्चनाक्रीडशैलाः ॥ ८२ ॥
नानारत्नस्तम्भशोभैरथासीत्सालंकारा तोरणैः स्वर्णवेदी ।
रात्रावन्तर्बिम्बितेन्दुग्रहोच्चैरास्थानीव श्रेयसो या विरेजे ॥ ८३ ॥
ऊर्ध्वं तस्यास्तार्क्ष्यहंसोक्षमुख्या दिक्संख्यातास्ता बभुर्वैजयन्त्यः ।
यासु व्योमोद्वेल्लनाकृष्टगङ्गाभ्रान्तिं चक्रुः स्यूतमुक्ताफलाभाः ॥ ८४ ॥
कर्णाकारं गोपुराणां चतुष्कं बिभ्रत्सालस्तत्परं काञ्चनोऽन्यः ।
धर्मव्याख्यामार्हतीं श्रोतुमिच्छन्मन्ये मेरुः कुण्डलीभूय तस्थौ ॥ ८५ ॥
वाञ्छातीतं यच्छतोऽप्यस्य पार्श्वे वाञ्छामात्रत्यागिनः कल्पवृक्षाः ।
तस्मिन्नुच्चैस्तस्थुरुद्धृत्य शाखाः का वा लज्जा हन्त निश्चेतनानाम् ॥ ८६ ॥
ऊर्ध्वं तेभ्योऽभूच्चतुर्गोपुराङ्का विश्वानन्दोज्जीविनी वज्रवेदी ।
रेजे पङ्क्तिस्तादृशानां दशानां रत्नज्योतिर्ज्यायसी तोरणानाम् ॥ ८७ ॥
स्तूपास्तेषामन्तरन्तर्नवोच्चैस्ते प्रत्येकं रेजुरर्चासनाथाः ।
तत्रैवासन्सन्मुनीनां मनोज्ञा नानासंसन्मण्डपास्तुङ्गतुङ्गाः ॥ ८८ ॥
रुद्धक्रूरानङ्गहेतिप्रचारस्तत्प्राकारः स्फाटिकः प्रादुरासीत् ।
तस्याप्यन्तश्चन्द्रकान्तप्रतिष्ठाः कोष्ठास्तत्र द्वादशासन्गरिष्ठाः ॥ ८९ ॥
वीतग्रन्थाः कल्पनार्योऽप्यथार्या ज्योतिर्भौमा हि स्त्रियो भावनाश्च ।
भौमज्योतिः कल्पदेवा मनुष्यास्तिर्यग्यूथान्येषु तस्थुः क्रमेण ॥ ९० ॥
ऊर्ध्वं तेभ्यो वल्लभं लोचनानां स्थानं दिव्यं गन्धकुट्याख्यमासीत् ।
अन्तस्तस्योद्दाममाणिक्यदीपं रेजे रम्यं काञ्चनं सिंहपीठम् ॥ ९१ ॥

रत्नज्योतिर्भासुरे तत्र पीठे तिष्ठन्देवः शुभ्रभामण्डलस्थः ।
क्षीराम्भोधेः सिच्यमानः पयोभिर्भूयो रेजे काञ्चनाद्राविवोच्चैः ॥ ९२ ॥
गायन्नादेनेव भृङ्गाङ्गनानां नृत्यल्लोलैः पल्लवानामिवौघैः ।
किं ब्रूमोऽन्यत्तस्य वृत्तं गुणौघैर्जज्ञे रक्तो यस्य वृक्षोऽप्यशोकः ॥ ९३ ॥
वृष्टिः पौष्पी सा कुतोऽभून्नभस्तः संभाव्यन्ते नात्र पुष्पाणि यस्मात् ।
यद्वा ज्ञातं द्रागनङ्गस्य हस्तादर्हद्भीत्या तत्र बाणा निपेतुः ॥ ९४ ॥
आविर्भूतं यद्भवद्भूतभावि ज्ञानाकारं तुल्यमिन्दुत्रयेण ।
अव्याबाधामातपत्रत्रयं तत्तस्यावोचद्भूत्रयैश्वर्यलक्ष्मीम् ॥ ९५ ॥
छाया कायस्यास्य सेवोपसर्पद्भास्वच्चक्रेणेव भामण्डलेन ।
क्षिप्ता नान्तश्चेत्कथं तत्प्रपेदे तीव्रा चेतस्तापसंपत्प्रशान्तिम् ॥ ९६ ॥
रेजे मुक्तिश्रीकटाक्षच्छटाभा पार्श्वे पङ्क्तिश्चामराणां जिनस्य ।
ज्ञानालोके निष्फलानामिवेन्दोर्भासामुच्चैर्दण्डनिर्यन्त्रितानाम् ॥ ९७ ॥
अप्युद्ग्रीवैः श्रूयमाणा कुरङ्गैः कर्णाभ्यर्णस्फारपीयूषधारा ।
आ गव्यूतिद्वन्द्वमभ्युल्लसन्ती दिव्या भाषा कस्य नासीत्सुखाय ॥ ९८ ॥
क्वेयं लक्ष्मीः क्वेदृशं निःस्पृहत्वं क्वेदं ज्ञानं क्वास्त्यनौद्धत्यमीदृक् ।
रे रे ब्रूत द्राक्कुतीर्था इतीव ज्ञाने भर्तुर्दुन्दुभिर्व्योम्न्यवादीत् ॥ ९९ ॥
लास्योल्लासा वाद्यविद्याविलासा गीतोद्गाराः कर्णपीयूषधाराः ।
स्थाने स्थाने तत्र ते ते बभूवुश्छायाप्यस्मिन्दुर्लभासीद्यदीया ॥ १०० ॥

इति निरुपमलक्ष्मीरष्टभिः प्रातिहार्यै-
रतिशयगुणशाली केवलज्ञानभानुः ।
समवसरणमध्ये धर्मतत्त्वं विवक्षुः
सुरपरिषदि तस्थौ धर्मनाथो जिनेन्द्रः ॥ १०१ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्ये विंशतितमः सर्गः ।

---

## एकविंशः सर्गः ।

तत्त्वं जगत्त्रयस्यापि बोधाय त्रिजगद्गुरुम् ।
तमापृच्छदथातुच्छज्ञानपण्यापणं गणी ॥ १ ॥

ततो भूतभवद्भाविपदार्थव्यक्तिसाक्षिणी ।
निःशेषदोषनिर्मुक्ता त्यक्तमिथ्यापथस्थितिः ॥ २ ॥
विपक्षगर्वसर्वस्वदूरोच्चाटनडिण्डिमः ।
अपारपापसंभारभूधरोपद्रवाशनिः ॥ ३ ॥
स्याद्वादवादसाम्राज्यप्रतिष्ठाप्रसवश्रुतिः ।
अतुल्यधर्ममल्लोरुकरास्फोटस्फुटाकृतिः ॥ ४ ॥
भ्रूविभ्रमकरन्यासश्वासौष्ठस्पन्दवर्जिता ।
वर्णविन्यासशून्यापि वस्तुबोधविधायिनी ॥ ५ ॥
पृथक्पृथगभिप्रायवचसामपि देहिनाम् ।
तुल्यमेकाप्यनेकेषां स्पष्टमिष्टार्थसाधिका ॥ ६ ॥
सर्वाद्भुतमयी सृष्टिः सुधावृष्टिश्च कर्णयोः ।
प्रावर्तत ततो वाणी सर्वविद्येश्वराद्विभोः ॥ ७ ॥ (कुलकम्)
जीवाजीवाश्रवा बन्धसंवरावपि निर्जराः ।
मोक्षश्चेतीह तत्त्वानि सप्त स्युर्जिनशासने ॥ ८ ॥
बन्धान्तर्भाविनोः पुण्यपापयोः पृथगुक्तितः ।
पदार्था नव जायन्ते तान्येव भुवनत्रये ॥ ९ ॥
अमूर्तश्चेतनाचिह्नः कर्ता भोक्तातनुप्रभः ।
ऊर्ध्वगामी स्मृतो जीवः स्थित्युत्पत्तिव्ययात्मकः ॥ १० ॥
सिद्धसंसारिभेदेन द्विप्रकारः स कीर्तितः ।
नरकादिगतेर्भेदात्संसारी स्याच्चतुर्विधः ॥ ११ ॥
नारकः सप्तधा सप्तपृथ्वीभेदेन भिद्यते ।
अधिकाधिकसंक्लेशप्रमाणायुर्विशेषतः ॥ १२ ॥
रत्नशर्करावालुकापङ्कधूमतमःप्रभाः ।
महातमः प्रभा चेति सप्तैताः श्वभ्रभूमयः ॥ १३ ॥
तत्राद्या त्रिंशता लक्षैर्बिलानामतिभीषणा ।
द्वितीया पञ्चविंशत्या तृतीया च तिथिप्रमैः ॥ १४ ॥

चतुर्थी दशभिर्युक्ता पञ्चमी त्रिभिरुल्बणैः ।
षष्ठी पञ्चोनलक्षेण सप्तमी पञ्चभिर्बिलैः ॥ १५ ॥
एवं नरकलक्षाणामशीतिश्चतुरुत्तरा ।
विज्ञेया तासु दुःखानां न संख्या निपुणैरपि ॥ १६ ॥
षडङ्गुलास्त्रयो हस्ताः सप्त चापानि विग्रहे ।
इयत्येव प्रमा ज्ञेया प्राणिनां प्रथमक्षितौ ॥ १७ ॥
द्वितीयादिष्वतोऽन्यासु द्विगुणद्विगुणोदयः ।
उत्सेधः स्याद्धरित्रीषु यावत्पञ्चधनुःशती ॥ १८ ॥
प्रसरद्दुःखसंतानमन्तर्मातुमिवाक्षमम् ।
वर्धयत्यङ्गमेतेषामधोऽधो धरणीष्वतः ॥ १९ ॥
एक आद्ये द्वितीये च त्रयः सप्त तृतीयके ।
चतुर्थे पञ्चमे च स्युर्दश सप्तदश क्रमात् ॥ २० ॥
षष्ठे द्वाविंशतिर्ज्ञेया त्रयस्त्रिंशच्च सप्तमे ।
आयुर्दुःखापवरके नरके सागरोपमाः ॥ २१ ॥
आद्ये वर्षसहस्राणि दशायुरधमं ततः ।
पूर्वस्मिन्यद्यदुत्कृष्टं निकृष्टं तत्तदग्रिमे ॥ २२ ॥
कदाचिदपि नैतेषां विधिरेधयतीहितम् ।
दुःखिनामनभिप्रेतमिवायुर्वर्धयत्यसौ ॥ २३ ॥
रौद्रध्यानानुबन्धेन बह्वारम्भपरिग्रहाः ।
तत्रौपपादिका जीवा जायन्ते दुःखखानयः ॥ २४ ॥
तेषामालिङ्गिताङ्गानां संततं दुःखसंपदा ।
न कदापि कृतेर्ष्येव सुखश्रीर्मुखमीक्षते ॥ २५ ॥
साश्रुणी लोचने वाणी गद्गदा विह्वलं मनः ।
स्यात्तदेषां कथं दुःखं वर्णयन्ति दयालवः ॥ २६ ॥
सूतवद्भिन्नमप्यङ्गं यन्मिलत्यापदे पुनः ।
दुःखाकरोति मच्चित्तं तेन वार्तापि तादृशाम् ॥ २७ ॥

---

१. पारदवत्.

मधुमांसासवासक्त्यावगणय्य जिनागमम् ।
कौलादिदाम्भिकाचार्यसपर्याकारि यत्त्वया ॥ २८ ॥
तस्येदं भुज्यतां पक्वं फलमित्यसुरामराः ।
उत्कृत्योत्कृत्य तन्मांसं तन्मुखे प्रक्षिपन्त्यमी ॥ २९ ॥
पाययन्ति च निस्त्रिंशाः प्रतप्तकललं मुहुः ।
घ्नन्ति बध्नन्ति मथ्नन्ति क्रकचैर्दारयन्ति च ॥ ३० ॥
खण्डनं ताडनं तत्रोत्कर्तनं यन्त्रपीडनम् ।
किं किं दुष्कर्मणः पाकात्सहन्ते ते न दुःसहम् ॥ ३१ ॥
कृता श्वभ्रगतेर्भेदात्तत्स्वरूपनिरूपणा ।
व्यावर्ण्यते कियानस्या भेदस्तिर्यग्गतेरपि ॥ ३२ ॥
तिर्यग्योनिर्द्विधा जीवस्त्रसस्थावरभेदतः ।
त्रसा द्वित्रिचतुःपञ्चकरणाः स्युश्चतुर्विधाः ॥ ३३ ॥
स्पर्शसाधारणेष्वेषु नूनमेकैकमिन्द्रियम् ।
वर्धते रसनं घ्राणं चक्षुः श्रोत्रमिति क्रमात् ॥ ३४ ॥
वर्षाणि द्वादशैवायुर्मानं द्वादशयोजनम् ।
विवृणोति प्रकर्षेण जीवो द्वीन्द्रियविग्रहः ॥ ३५ ॥
दिनान्येकोनपञ्चाशदायुरुत्र्यक्षे शरीरिणि ।
पादोनयोजनं मानं जिनाः प्राहुः प्रकर्षतः ॥ ३६ ॥
आयुर्योजनमानस्य चतुरक्षस्य देहिनः ।
षण्मासप्रमितं प्रोक्तं जिनैः केवललोचनैः ॥ ३७ ॥
सहस्रमेकमुत्सेधो योजनानां प्रकीर्तितः ।
पूर्वकोटिमितं चायुः पञ्चेन्द्रियशरीरिणाम् ॥ ३८ ॥
पृथिवीमारुतापस्तेजोवनस्पतिविभेदतः ।
अद्वितीयेन्द्रियाः सर्वे स्थावराः पञ्चकायिकाः ॥ ३९ ॥
द्वाविंशतिः सहस्राणि वर्षाणामायुरादिमे ।
द्वितीये त्रीणि सप्त स्यात्तृतीयेऽपि यथाक्रमम् ॥ ४० ॥

१. त्रसाश्चराः.

चतुर्थे त्रीण्यहान्येव पञ्चमस्य प्रकर्षतः ।
पञ्चेन्द्रियाधिकोत्सेधस्याब्दानामयुतं मतम् ॥ ४१ ॥
आर्तध्यानवशाज्जीवो लब्धजन्मात्र जायते ।
शीतवर्षातपक्लेशवधबन्धादिदुःखभाक् ॥ ४२ ॥
इति तिर्यग्गतेर्भेदो यथागममुदीरितः ।
मानवानां गतेः कोऽपि प्रकारः कथ्यतेऽधुना ॥ ४३ ॥
द्विःप्रकारा नरा भोगकर्मभूभेदतः स्मृताः ।
देवकुर्वादयस्त्रिंशत्प्रसिद्धा भोगभूमयः ॥ ४४ ॥
जघन्यमध्यमोत्कृष्टभेदात्तास्त्रिविधाः क्रमात् ।
द्विचतुःषड्धनुर्दण्डसहस्रोत्तुङ्गमानवाः ॥ ४५ ॥
तास्वेकद्वित्रिपल्यायुर्जीविनो भुञ्जते नराः ।
दशानां कल्पवृक्षाणां पात्रदानार्जितं फलम् ॥ ४६ ॥
कर्मभूमिभवास्तेऽपि द्विधार्यम्लेच्छभेदतः ।
भारताद्याः पुनः पञ्चदशोक्ताः कर्मभूमयः ॥ ४७ ॥
धनुःपञ्चशतैस्तासु सपादैः प्रमितोदयाः ।
उत्कर्षतो मनुष्याः स्युः पूर्वकोटिप्रमायुषः ॥ ४८ ॥
उत्सर्पिण्यवसर्पिण्योः कालयोर्वृद्धिह्रासिनी ।
भरतैरावते स्यातां विदेहस्त्वक्षतोदयः ॥ ४९ ॥
सागरोपमकोटीनां कोटिभिर्दशभिर्मिता ।
आगमज्ञैरिह प्रोक्तोत्सर्पिणी चावसर्पिणी ॥ ५० ॥
सुखमासुखमा प्रोक्ता सुखमा च ततो बुधैः ।
सुखमादुःखमान्यापि दुःखमासुखमा क्रमात् ॥ ५१ ॥
पञ्चमी दुःखमा षष्ठी दुःखमादुःखमा मता ।
प्रत्येकमिति भिद्यन्ते ते षोढा कालभेदतः ॥ ५२ ॥
चतस्रः कोटयस्तिस्रो द्वे च पूर्वादिषु क्रमात् ।
तिसृष्वम्भोधिकोटीनां मानमुक्तं जिनागमे ॥ ५३ ॥

ऊना सहस्रैरब्दानां द्वाचत्वारिंशता ततः ।
चतुर्थ्यम्भोधिकोटीनां कोटिरेका प्रकीर्तिता ॥ ९४ ॥
पञ्चमी वत्सराणां स्यात्सहस्राण्येकविंशतिः ।
तत्प्रमाणैव तत्त्वज्ञैर्नूनं षष्ठी प्रतिष्ठिता ॥ ९५ ॥
षोढा षट्कर्मभेदेनते गुणस्थानभेदतः ।
स्युश्चतुर्दश धात्रीर्या म्लेच्छाः पञ्च प्रकीर्तिताः ॥ ९६ ॥
स्वभावमार्दवत्वेन स्वल्पारम्भपरिग्रहाः ।
भवन्त्यत्र नराः पुण्यपापातिप्रक्षयक्रमाः ॥ ९७ ॥
नारीगर्भेऽतिबीभत्से कफामासृज्जलाविले ॥
कुम्भीपाकाधिकासाते (?) जायते कृमिवन्नरः ॥ ९८ ॥
वर्णितेति गतिर्नृणां देवानामपि संप्रति ।
कियत्यपि स्मरानन्दोज्जीविनी वर्णयिष्यते ॥ ९९ ॥
भावनव्यन्तरज्योतिर्वैमानिकविभेदतः ।
देवाश्चतुर्विधास्तेषु भावना दशधोदिताः ॥ ६० ॥
असुराहिसुपर्णाग्निविद्युद्वातकुमारकाः ।
दिग्द्वीपस्तनिताम्भोधिकुमाराश्चेति भेदतः ॥ ६१ ॥
तत्रासुरकुमाराणामुत्सेधः पञ्चविंशतिः ।
चापानि दश शेषाणामभ्युदन्वत्परायुषाम् ॥ ६२ ॥
दशसप्तधनुर्माना व्यन्तराः किंनरादयाः ।
शिष्टास्तेऽष्टविधा येषामायुः पल्योपमं परम् ॥ ६३ ॥
ज्योतिष्काः पञ्चधा प्रोक्ताः सूर्यचन्द्रादिभेदतः ।
येषामायुःप्रमाणं च व्यन्तराणामिवाधिकम् ॥ ६४ ॥
वर्षाणामयुतं भौमभावनानामिहावमम् ।
पल्यस्यैवाष्टमो भागो ज्योतिषामायुरीरितम् ॥ ६५ ॥
वैमानिका द्विधा कल्पसंभूतातीतभेदतः ।
कल्पजास्तेऽच्युतादर्वाक्कल्पातीतास्ततः परे ॥ ६६ ॥

सौधर्मेशाननामानौ धर्मारम्भमहोद्यमौ ।
सनत्कुमारमाहेन्द्रौ ब्रह्मब्रह्मोत्तरावपि ॥ ६७ ॥
ततो लान्तवकापिष्ठौ शुक्रशुक्रोत्तरौ परौ ।
शताराख्यसहस्रारावानतप्राणतावपि ॥ ६८ ॥
अथारणाच्युतौ कल्पाः षोडशेति प्रकीर्तिताः ।
इदानीं तेषु देवानामायुर्मानं च कथ्यते ॥ ६९ ॥
हस्ताः सप्त द्वयोर्मानं षडूर्ध्वं नाकिषु द्वयोः ।
चतुर्णां पञ्च चत्वारस्तदूर्ध्वं तावतां क्रमात् ॥ ७० ॥
त्रयः सार्धा द्वयोरूर्ध्वमूर्ध्वमाभ्यां द्वयोस्त्रयः ।
इति षोडशकल्पानामूर्ध्वं ग्रैवेयकेष्वपि ॥ ७१ ॥
अधःस्थेषु करौ सार्धौ द्वौ मध्येषूर्ध्वगेषु च ।
त्रिषु सार्धकरास्तेभ्यः परे हस्तप्रमाः सुराः ॥ ७२ ॥
सौधर्मेशानयोरायुःस्थितिर्द्वौ सागरौ मतौ ।
सनत्कुमारमाहेन्द्रकल्पयोः सप्तसागराः ॥ ७३ ॥
दशैव कल्पयोर्ज्ञेया ब्रह्मब्रह्मोत्तराख्ययोः ।
निर्णीता लान्तवे कल्पे कापिष्ठे च चतुर्दश ॥ ७४ ॥
षोडशैव ततः शुक्रमहाशुक्राभिधानयोः ।
अष्टादश शतारे च सहस्रारे च निश्चिताः ॥ ७५ ॥
वर्णिता विंशतिर्नूनमानतप्राणताख्ययोः ।
उक्ता द्वाविंशतिः प्राज्ञैरारणाच्युतयोरपि ॥ ७६ ॥
सर्वार्थसिद्धिपर्यन्तेष्वतो ग्रैवेयकादिषु ।
एकैको वर्धते तावद्यावत्रिंशत्रयाधिका ॥ ७७ ॥
अकामनिर्जराबालतपःसंपत्कयोगतः ।
अत्रौपपादिका भूत्वा प्रपद्यन्ते सुराः सुखम् ॥ ७८ ॥
विलासोल्लाससर्वस्वं रतिकोषसमुच्चयम् ।
शृङ्गाररससाम्राज्यं भुञ्जते ते निरन्तरम् ॥ ७९ ॥

इति व्यावर्णितो जीवश्चतुर्गत्यादिभेदतः ।
संप्रत्यजीवतत्त्वस्य किंचिद्रूपं निरूप्यते ॥ ८० ॥
धर्माधर्मौ नभः कालः पुद्गलश्चेति पञ्चधा ।
अजीवः कथ्यते सम्यग्जिनैस्तत्त्वार्थदर्शिभिः ॥ ८१ ॥
षड्द्रव्याणीति वर्ण्यन्ते समं जीवेन तान्यपि ।
विना कालेन तान्येव यान्ति पञ्चास्तिकायताम् ॥ ८२ ॥
धर्मः स तात्त्विकैरुक्तो यो भवेद्गतिकारणम् ।
जीवादीनां पदार्थानां मत्स्यानामुदकं यथा ॥ ८३ ॥
छायेव घर्मतप्तानामश्वादीनामिव क्षितिः ।
द्रव्याणां पुद्गलादीनामधर्मः स्थितिकारणम् ॥ ८४ ॥
लोकाकाशमभिव्याप्य स्थितावेतावनिष्क्रियौ ।
नित्यावप्रेरकौ हेतू मूर्तिहीनावुभावपि ॥ ८५ ॥
पुद्गलादिपदार्थानामवगाहैकलक्षणः ।
लोकाकाशः स्मृतो व्यापी शुद्धाकाशो बहिस्ततः ॥ ८६ ॥
धर्माधर्मैकजीवाः स्युरसंख्येयप्रदेशकाः ।
व्योमानन्तप्रदेशं तु सर्वज्ञैः प्रतिपाद्यते ॥ ८७ ॥
जीवादीनां पदार्थानां परिणामोपयोगतः ।
वर्तनालक्षणः कालोऽनंशो नित्यश्च निश्चयात् ॥ ८८ ॥
कालो दिनकरादीनामुदयास्तक्रियात्मकः ।
औपचारिक एवासौ मुख्यकालस्य सूचकः ॥ ८९ ॥
रूपगन्धरसस्पर्शशब्दवन्तश्च पुद्गलाः ।
द्विधा स्कन्धाणुभेदेन त्रैलोक्यारम्भहेतवः ॥ ९० ॥
भूमितैलतमोगन्धकर्माणुप्रकृतिः क्रमात् ।
स्थूलास्थूलादिभेदाः स्युस्तेषां षोढा जिनागमे ॥ ९१ ॥
भाषाहारशरीराख्यप्राणापानादिमूर्तिमत् ।
यत्किंचिदस्ति तत्सर्वं स्थूलं सूक्ष्मं च पुद्गलम् ॥ ९२ ॥

यथागममजीवस्य कृता रूपनिरूपणा ।
इदानीमाश्रवस्यापि कोषमुन्मुद्रयाम्यहम् ॥ ९३ ॥
शरीरवाङ्मनःकर्मयोग एवाश्रवो मतः ।
शुभाशुभविकल्पोऽसौ पुण्यपापानुषङ्गतः ॥ ९४ ॥
गुरुनिह्नवदोषोक्तिमात्सर्यासादनादयः ।
आश्रयत्वेन विज्ञेया दृग्ज्ञानावृत्तिकर्मणोः ॥ ९५ ॥
दुःखशोकभयाक्रन्दसंतापपरिदेवनैः ।
जीवो बध्नात्यसद्वेद्यं स्वपराभयसंश्रयैः ॥ ९६ ॥
क्षान्तिशौचदयादानसरागसंयमादयः ।
भवन्ति हेतवः सम्यगसद्वेद्यस्य कर्मणः ॥ ९७ ॥
केवलिश्रुतसंघार्हद्धर्माणामविवेकतः ।
अवर्णवाद एवाद्यो दृष्टिमोहस्य संभवः ॥ ९८ ॥
कषायोदयतस्तीव्रपरिणामो मनस्विनाम् ।
चारित्रमोहनीयस्य कर्मणः कारणं परम् ॥ ९९ ॥
श्वभ्रायुषो निमित्तानि बह्वारम्भपरिग्रहाः ।
मायार्तध्यानतामूलं तिर्यग्योनिभवायुषः ॥ १०० ॥
नरायुषोऽपि हेतुः स्यादल्पारम्भपरिग्रहः ।
सरागसंयमत्वादिनिदानं त्रिदशायुषः ॥ १०१ ॥
स्याद्विसंवादनं योगवक्रता च निरत्यया ।
हेतुरशुभस्य नाम्नतदन्यस्य तदन्यथा ॥ १०२ ॥
षोडशदृग्विशुद्ध्याद्यास्तीर्थकृन्नामकर्मणः ।
स्वप्रशंसान्यनिन्दाद्या नीचैर्गोत्रस्य हेतवः ॥ १०३ ॥
विपरीताः पुनस्ते स्युरुच्चैर्गोत्रस्य साधकाः ।
अन्तरायः सदानादिर्विघ्ननिर्वर्तनोदयः ॥ १०४ ॥
रहस्यमिति निर्दिष्टं किमप्याश्रवगोचरम् ।
बन्धतत्त्वप्रबोधोऽयमधुना विधिनोच्यते ॥ १०५ ॥

सकषायतया दत्ते जीवोऽसंख्यप्रदेशगान् ।
पुद्गलान्कर्मणो योग्यान्बन्धः स इह कथ्यते ॥ १०६ ॥
मिथ्यादृक्च प्रमादाश्च योगाश्चाविरतिस्तथा ।
कषायाश्च स्मृता जन्तोः पञ्च बन्धस्य हेतवः ॥ १०७ ॥
प्रकृतिस्थित्यनुभागप्रदेशानां विभेदतः ।
चतुर्विधः प्रणीतोऽसौ जैनागमविचक्षणैः ॥ १०८ ॥
अष्टौ प्रकृतयः प्रोक्ता ज्ञानावृतिदृगावृती ।
वेद्यं च मोहनीयायुर्नामगोत्रान्तरराययुक् ॥ १०९ ॥
तद्भेदाः पञ्च नव द्वावष्टाविंशतिरप्यतः ।
चत्वारो द्विचत्वारिंशद्द्वौ पञ्चापि स्मृताः क्रमात् ॥ ११० ॥
आदितस्तिसृणां प्राज्ञैरन्तरायस्य च स्मृताः ।
सागरोपमकोटीनां त्रिंशत्कोट्यः परा स्थितिः ॥ १११ ॥
सप्ततिर्मोहनीयस्य विंशतिर्नामगोत्रयोः ।
आयुषस्तु त्रयस्त्रिंशद्विज्ञेयाः सागरोपमाः ॥ ११२ ॥
अवरावेदनीयस्य मुहूर्ता द्वादश स्थितिः ।
नाम्नो गोत्रस्य चाष्टौ स्याच्छेषास्त्वन्तर्मुहूर्तकम् ॥ ११३ ॥
भाव्यक्षेत्रादिसापेक्षो विपाकः कोऽपि कर्मणाम् ।
अनुभागो जिनैरुक्तः केवलज्ञानभानुभिः ॥ ११४ ॥
ये सर्वात्मप्रदेशेषु सर्वतो बन्धभेदतः ।
प्रदेशाः कर्मणोऽनन्ताः स प्रदेशः स्मृतो बुधैः ॥ ११५ ॥
इत्येष बन्धतत्त्वस्य चतुर्धा वर्णितः क्रमः ।
पदैः संह्रियते कैश्चित्संवरस्यापि डम्बरः ॥ ११६ ॥
आश्रवाणामशेषाणां निरोधः संवरः स्मृतः ।
कर्म संव्रियते येनेत्यन्वयस्यावलोकनात् ॥ ११७ ॥
आश्रवद्वाररोधेन शुभाशुभविशेषतः ।
कर्म संव्रियते येन संवरः स निगद्यते ॥११८॥ (इति पाठान्तरम्)

धर्मात्ममितिगुप्तिभ्यामनुप्रेक्षानुचिन्तनात्।
असावुदेति चारित्रादरिषट्कजयादपि॥ ११९॥
किमन्यैर्विस्तरैरेतद्रहस्यं जिनशासने।
आश्रवः संसृतेर्मूलं मोक्षमूलं तु संवरः॥ १२०॥
संवरो विवृतः सैष संप्रति प्रतिपाद्यते।
जर्जरीकृतकर्मायःपञ्जरा निर्जरा मया॥ १२१॥
दुर्जरं निर्जरत्यात्मा यया कर्म शुभाशुभम्।
निर्जरा सा द्विधा ज्ञेया सकामाकामभेदतः॥ १२२॥
सा सकामा स्मृता जैनैर्या व्रतोपक्रमैः कृता।
अकामा स्वविपाकेन यथा श्वभ्रादिवासिनाम्॥ १२३॥
सागारमनगारं च जैनेरुक्तं व्रतं द्विधा।
अणुमहाव्रतभेदेन तयोः सागारमुच्यते॥ १२४॥
अणुव्रतानि पञ्च स्युस्त्रिप्रकारं गुणव्रतम्।
शिक्षाव्रतानि चत्वारि सागाराणां जिनागमे॥ १२५॥
सम्यक्त्वं भूमिरेषां यन्न सिध्यन्ति तदुज्झिताः।
दूरोत्सारितसंसारात्यातपा व्रतपादपाः॥ १२६॥
धर्माप्तगुरुतत्त्वानां श्रद्धानं यत्सुनिर्मलम्।
शङ्कादिदोषनिर्मुक्तं सम्यक्त्वं तन्निगद्यते॥ १२७॥
तत्र धर्मः स एवाप्तैर्यः प्रोक्तो दशलक्षणः।
आप्तास्त एव ये दोषैरष्टादशभिरुज्झिताः॥ १२८॥
गुरुः स एव यो ग्रन्थैर्मुक्तो बाह्यैरिवान्तरैः।
तत्त्वं तदेव जीवादि यदुक्तं सर्वदर्शिभिः॥ १२९॥
शङ्काकाङ्क्षा विचिकित्सा मूढदृष्टिः प्रशंसनम्।
संस्तवश्चेत्यतीचाराः सम्यग्दृष्टेरुदाहृताः॥ १३०॥
अदेवे देवबुद्धिर्या गुरुधीरगुरावपि।
अतत्त्वे तत्त्वबुद्धिश्च तन्मिथ्यात्वं विलक्षणम्॥ १३१॥

मधुमांसासवत्यागः पञ्चोदुम्बरवर्जनम् ।
अमी मूलगुणाः सम्यग्दृष्टेरष्टौ प्रकीर्तिताः ॥ १३२ ॥
द्यूतं मांसं सुरा वेश्या पापर्द्धिः[1] स्तेयवृत्तिता ।
परदाराभियोगश्च त्याज्यो धर्मधुरंधरैः ॥ १३३ ॥
मोहादमूनि यः सप्त व्यसनान्यत्र सेवते ।
अपारे दुःखकान्तारे संसारे बम्भ्रमीति सः ॥ १३४ ॥
मुहूर्तद्वितयादूर्ध्वं भूयस्तोयमगालितम् ।
शीलयेन्नवनीतं च न देशविरतिः क्वचित् ॥ १३५ ॥
दिनद्वयोषितं तक्रं दधि वा पुष्पितौदनम् ।
आमगोरससंपृक्तं द्विदलं चाद्यान्न शुद्धधीः ॥ १३६ ॥
विद्धं विचलितस्वादं धन्यमन्यद्विरूढकम् ।
तैलमम्भोऽथवाज्यं वा चर्मपात्रापवित्रितम् ॥ १३७ ॥
आर्द्रकन्दं कलिङ्गं वा मूलकं कुसुमानि च ।
अनन्तकायमज्ञातफलं संधानकान्यपि ॥ १३८ ॥
एवमादि यदादिष्टं श्रावकाध्ययने सुधीः ।
तज्जैनीं पालयन्नाज्ञां क्षुत्क्षामोऽपि न भक्षयेत् ॥ १३९ ॥
पापभीरुर्निशाभुक्तिं दिवा मैथुनमप्यसौ ।
मनोवाक्कायसंशुद्ध्या सम्यग्दृष्टिर्विवर्जयेत् ॥ १४० ॥
वर्तमानोऽनया स्थित्या सुसमाहितमानसः ।
भवत्यधिकृतो नूनं श्रावकव्रतपालने ॥ १४१ ॥
हिंसानृतवचःस्तेयस्त्रीमैथुनपरिग्रहात् ।
देशतो विरतिर्ज्ञेया पञ्चधाणुव्रतस्थितिः ॥ १४२ ॥
दिग्देशानर्थदण्डेभ्यो यत्त्रिधा विनिवर्तनम् ।
पोतायते भवाम्भोधौ त्रिविधं तद्गुणव्रतम् ॥ १४३ ॥
शोधनीयत्रशस्त्राग्निमुसलोलूखलार्पणम् ।
ताम्रचूडश्वमार्जारशारिकाशुकपोषणम् ॥ १४४ ॥

---

1. मृगया.

अङ्गारशकटारामभाटकास्फोटजीवनम् ।
तिलतोयेक्षुयन्त्राणां रोपणं दावदीपनम् ॥ १४५ ॥
दन्तकेशनखास्थित्वग्रोम्णां निन्द्यरसस्य च ।
शणलाङ्गललाक्षायःक्ष्वेडादीनां च विक्रयः ॥ १४६ ॥
वापीकूपतडागादिशोषणं कर्षणं भुवः ।
निर्लाञ्छनं भक्षरोधः पशूनामतिभारणम् ॥ १४७ ॥
वनकेलिर्जलक्रीडा चित्रलेप्यादिकर्म वा ।
एवमन्येऽपि बहवोऽनर्थदण्डाः प्रकीर्तिताः ॥ १४८ ॥
सामाजिकमथाद्यं स्याच्छिक्षाव्रतमगारिणाम् ।
आर्तरौद्रे परित्यज्य त्रिकालं जिनवन्दनात् ॥ १४९ ॥
निवृत्तिर्भुक्तभोगानां या स्यात्पर्वचतुष्टये ।
पोषधाख्यं द्वितीयं तच्छिक्षाव्रतमितीरितम् ॥ १५० ॥
भोगोपभोगसंख्यानं क्रियते यदलोलुपैः ।
तृतीयं तत्तदाख्यं स्याद्दुःखदावानलोदकम् ॥ १५१ ॥
गृहागताय यत्काले शुद्धं दानं यतात्मने ।
अन्ते सल्लेखना वान्यतच्चतुर्थं प्रकीर्त्यते ॥ १५२ ॥
व्रतानि द्वादशैतानि सम्यग्दृष्टिर्बिभर्ति यः ।
जानुदघ्नीकृतागाधभवाम्भोधिः स जायते ॥ १५३ ॥
यथागममिति प्रोक्तं व्रतं देशयतात्मनाम् ।
अनागारमतः किंचिद्ब्रूमस्त्रैलोक्यमण्डनम् ॥ १५४ ॥
अनागारं व्रतं द्वेधा बाह्याभ्यन्तरभेदतः ।
षोढा बाह्यं जिनैः प्रोक्तं तावत्संख्यानमान्तरम् ॥ १५५ ॥
वृत्तिसंख्यानमौदर्यमुपवासो रसोज्झनम् (?) ।
रहः स्थितितनुक्लेशौ षोढा बाह्यमिति व्रतम् ॥ १५६ ॥
स्वाध्यायो विनयो ध्यानं व्युत्सर्गो व्यावृतिस्तथा ।
प्रायश्चित्तमिति प्रोक्तं तपः षड्विधमान्तरम् ॥ १५७ ॥

यास्तिस्रो गुप्तयः पञ्च ख्याताः समितयोऽपि ताः ।
जननात्पालनात्पोषादष्टौ तन्मातरः स्मृताः ॥ १५८ ॥
निरूपितमिदं रूपं निर्जरायाः समासतः ।
इयमक्षीणसौख्यस्य लक्ष्मीर्मोक्षस्य वर्ण्यते ॥ १५९ ॥
अभावाद्बन्धहेतूनां निर्जरायाश्च यो भवेत् ।
निःशेषकर्मनिर्मोक्षः स मोक्षः कथ्यते जिनैः ॥ १६० ॥
ज्ञानदर्शनचारित्रैरुपायैः परिणामिनः ।
भव्यस्यायमनेकाङ्गविकलैरेव जायते ॥ १६१ ॥
तत्त्वस्यावगतिर्ज्ञानं श्रद्धानन्तस्य दर्शनम् ।
पापारम्भनिवृत्तिस्तु चारित्रं वर्ण्यते जिनैः ॥ १६२ ॥
ज्वालाकलापवद्वह्रेरूर्ध्वमेरण्डबीजवत् ।
ततः स्वभावतो याति जीवः प्रक्षीणबन्धनः ॥ १६३ ॥
लोकाग्रं प्राप्य तत्रैव स्थितिं बध्नाति शाश्वतीम् ।
ऊर्ध्वं धर्मास्तिकायस्य विप्रयोगान्न यात्यसौ ॥ १६४ ॥
तत्रानन्तमसंप्राप्तमव्याबाधमसन्निभम् ।
प्राग्देहात्किंचिदूनोऽसौ सुखं प्राप्नोति शाश्वतम् ॥ १६५ ॥
इति तत्त्वप्रकाशेन निःशेषामपि तां सभाम् ।
प्रभुः प्रह्लादयामास विवस्वानिव पद्मिनीम् ॥ १६६ ॥
अथ पुण्यैः समाकृष्टो भव्यानां निःस्पृहः प्रभुः ।
देशे देशे तमश्छेत्तुं व्यचरद्भानुमानिव ॥ १६७ ॥
दत्तविश्वावकाशोऽयमाकाशोऽतिगुरुः क्षितेः ।
गन्तुमित्यादृतस्तेन स्थानमुच्चैर्यियासुना ॥ १६८ ॥
अनपायामिव प्राप्तुं पादच्छायां नभस्तले ।
उपकण्ठे लुलोठास्य पादयोः कमलोत्करः ॥ १६९ ॥
यत्तदा विदधे तस्य पादयोः पर्युपासनम् ।
अद्यापि भाजनं लक्ष्म्यास्तेनायं कमलाकरः ॥ १७० ॥

तिलकं तीर्थकृल्लक्ष्म्यास्तस्य प्राह पुरो भ्रमत् ।
धर्मचक्रं जगच्चक्रे चक्रवर्तित्वमक्षतम् ॥ १७१ ॥
विश्वप्रकाशकस्यास्य तेजोभिर्व्यर्थतां गतः ।
सेवार्थं संचचाराग्रे धर्मचक्रच्छलाद्रविः ॥ १७२ ॥
यत्रातिशयसंपन्नो विजहार जिनेश्वरः ।
तत्र रोगग्रहातङ्कशोकशङ्कापि दुर्लभा ॥ १७३ ॥
निष्कलाभा बभूवुस्ते विपक्षा इव सज्जनाः ।
प्रजा इव भुवोऽप्यासन्निष्कण्टकपरिग्रहाः ॥ १७४ ॥
के विपक्षा वराकास्ते प्रातिकूल्यविधौ प्रभोः ।
महाबलोऽपि यद्वायुः प्राप तस्यानुकूलताम् ॥ १७५ ॥
हेमरम्यं वपुः पञ्चचत्वारिंशद्धनुर्मितम् ।
बिभ्रद्देवैः श्रितो रेजे स्वर्णशैल इवापरः ॥ १७६ ॥
द्वाचत्वारिंशदेतस्य सभायां गणिनोऽभवन् ।
नवैव तीक्ष्णबुद्धीनां शतानि पूर्वधारिणाम् ॥ १७७ ॥
शिक्षकाणां सहस्राणि चत्वारि सप्तभिः शतैः ।
सह षड्भिः शतैस्त्रीणि सहस्राण्यधिबोधिनाम् ॥ १७८ ॥
केवलज्ञानिनां पञ्चचत्वारिंशच्छतानि च ।
मनःपर्ययनेत्राणां तावन्ति क्षपितांहसाम् ॥ १७९ ॥
सप्तैव च सहस्राणि विक्रयर्द्धिमुपेयुषाम् ।
शतैरष्टाभिराश्लिष्टे द्वे सहस्रे च वादिनाम् ॥ १८० ॥
अर्जिकाणां सहस्राणि षट्चतुर्भिः शतैः सह ।
श्रावकाणां च लक्षे द्वे शुद्धसम्यक्त्वशालिनाम् ॥ १८१ ॥
श्राविकाणां तु चत्वारि लक्षाणि क्षपितैनसाम् ।
निर्जराणां तिरश्चां च संख्याप्यत्र न बुध्यते ॥ १८२ ॥
इत्याश्वास्य चतुर्विधेन महता संघेन संभूषितः
सैन्येनेव विपक्षवादिवदनाक्रुष्टामशेषां महीम् ।

दृप्यन्मोहचमूं विजित्य विजयस्तम्भायमानं तदा ।
सम्मेदाचलमाससाद विजयश्रीर्धर्मनाथः प्रभुः ॥ १८३ ॥
तत्रासाद्य सितांशुभोगसुभगां चैत्रे. चतुर्थीं तिथिं
यामिन्यां स नवोत्तरैर्यमवतां साकं शतैरष्टभिः ।
सार्धद्वादशवर्षलक्षपरमारम्यायुषः प्रक्षये
ध्यानध्वस्तसमस्तकर्मनिगलो जातस्तदानीं क्षणात् ॥ १८४ ॥
अभजदथ विचित्रैर्वाक्प्रसूनोपचारैः
प्रभुरिह हरिचन्द्राराधितो मोक्षलक्ष्मीम् ।
तदनु तदनुयायी प्राप्तपर्यन्तपूजो-
पचितसुकृतराशिः स्वं पदं नाकिलोकः ॥ १८५ ॥

इति महाकविश्रीहरिचन्द्रविरचिते धर्मशर्माभ्युदये महाकाव्य एकविंशः सर्गः ।

---

ग्रन्थकर्तुः प्रशस्तिः ।

श्रीमानमेयमहिमास्ति स नोमकानां
वंशः समस्तजगतीवलयावतंसः ।
हस्तावलम्बनमवाप्य यमुल्लसन्ती
वृद्धापि न स्खलति दुर्गपथेषु लक्ष्मीः ॥ १ ॥
मुक्ताफलस्थितिरलंकृतिषु प्रसिद्ध-
स्तत्रार्द्रदेव इति निर्मलमूर्तिरासीत् ।
कायस्थ एव निरवद्यगुणग्रहः स-
न्नेकोऽपि यः कुलमशेषमलंचकार ॥ २ ॥
लावण्याम्बुनिधिः कलाकुलगृहं सौभाग्यसद्भाग्ययोः
क्रीडावेश्म विलासवासवलभी भूषास्पदं संपदाम् ।
शौचाचारविवेकविस्मयमही प्राणप्रिया शूलिनः
शर्वाणीव पतिव्रता प्रणयिनी रथ्येति तस्याभवत् ॥ ३ ॥
अर्हत्पदाम्भोरुहचञ्चरीकस्तयोः सुतः श्रीहरिचन्द्र आसीत् ।
गुरुप्रसादादमला बभूवुः सारस्वते स्रोतसि यस्य वाचः ॥ ४ ॥

भक्तेन शक्तेन च लक्ष्मणेन निर्व्याकुलो राम इवानुजेन ।
यः पारमासादितबुद्धिसेतुः शास्त्राम्बुराशेः परमाससाद ॥ ५ ॥
पदार्थवैचित्र्यरहस्यसंपत्सर्वस्वनिर्वेशमयात्प्रसादात् ।
वाग्देवतायाः समवेदि सभ्यैर्यः पश्चिमोऽपि प्रथमस्तनूजः ॥ ६ ॥
स कर्णपीयूषरसप्रवाहं रसध्वनेरध्वनि सार्थवाहः ।
श्रीधर्मशर्माभ्युदयाभिधानं महाकविः काव्यमिदं व्यधत्त ॥ ७ ॥

एष्यत्यसारमपि काव्यमिदं मदीय-
मादेयतां जिनपतेरनघैश्चरित्रैः ।
पिण्डं मृदः स्वयमुदस्य नरा नरेन्द्र-
मुद्राङ्कितं किमु न मूर्धनि धारयन्ति ॥ ८ ॥

दक्षैः साधु परीक्षितं नवनवोल्लेखार्पणेनादरा-
द्यच्चेतःकषपट्टिकासु शतशः प्राप्तप्रकर्षोदयम् ।
नानाभङ्गिविचित्रभावघटनासौभाग्यशोभास्पदं
तन्नः काव्यसुवर्णमस्तु कृतिनां कर्णद्वयीभूषणम् ॥ ९ ॥

जीयाज्जैनमिदं मतं शमयतु क्रूरानपीयं कृपा
भारत्या सह शीलयत्वविरतं श्रीः साहचर्यव्रतम् ।
मात्सर्यं गुणिषु त्यजन्तु पिशुनाः संतोषलीलाजुषः
सन्तः सन्तु भवन्तु च श्रमविदः सर्वे कवीनां जनाः ॥ १० ॥

**समाप्तोऽयं ग्रन्थः ।**

---

# धर्मशर्माभ्युदयस्थश्लोकानां सूची।

१६

# धर्मशर्माभ्युदयस्यैकोनविंशसर्गस्थचित्राणामुद्धारः।

## १ गोमूत्रिकाबन्धः। (श्लोकः ७८)

## ३ सर्वतोभद्रम्। (श्लोकः ८६)

| भ | रं | या | म | म | या | रं | भ |
|---|---|---|---|---|---|---|---|
| रं | जि | ता | द | द | ता | जि | रं |
| या | ता | क्ष | मा | मा | क्ष | ता | या |
| म | द | मा | र | र | मा | द | म |
| म | द | मा | र | र | मा | द | म |
| या | ता | क्ष | मा | मा | क्ष | ता | या |
| रं | जि | ता | द | द | ता | जि | रं |
| भ | रं | या | म | म | या | रं | भ |

## २ अर्धभ्रमः। (श्लोकः ८४)

| ज | घा | न | क | र | वा | ली | य |
|---|---|---|---|---|---|---|---|
| घा | ते | ना | रे | बे | लं | ब | ली |
| न | ना | धा | ते | नि | रा | लं | बा |
| क | रे | ते | ना | व | नि | र्व | रः |

## ४ मुरजबन्धः। (श्लोकः ९४)

६ चक्रबन्धः । (श्लोकौ १०१ । १०२)

